व्यासः,—

शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

तथा,—

सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा नरः ।
उष्णीषी वापि नाचामेद् वस्त्रेणावेष्ट्य वा शिरः ॥

[1]गौतमः,—वाग्यतो हृदयस्पृशस्त्रियतुर्वा अप आचामेत् । [2]त्रियतुर्वेति भावशुद्धापेक्षया । हृदयगामिन्योऽपः ।

[3]भविष्ये,—

समौ च चरणौ कृत्वा तथा बद्धशिखो नृप ।
घनाङ्गुलिकरं कृत्वा [4]एकाग्रसुमना द्विजः ॥

नारसिंहे,—

दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत् पुनः ।
त्रिः पिबेद् वीक्षितं तोयं आस्यं द्विः परिमार्जयेत् ।

दक्ष,—

संहृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात् ततो मुखम् ।
संहताभिस्त्रिभिः पूर्व्वमास्यमेवमुपस्पृशेत् ॥ ॥

---

(1) D. गौतम,—
(2) D त्रिश्चतुर्वेति भावशुद्धापेक्षायाम् ।
(3) B. D भविष्यपुराणे ।
(4) D एकाग्र सुमना ॰

मुखं संहत्य [1]प्रमृज्यात् । एवम्,—संहत्यास्यमुपस्पृशेत् ।

आपस्तम्बः,—त्रिरोष्ठौ परिमृजेत् द्विरित्येके । सकृदुपस्पृशेत् द्विरित्येके । दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेत् । पादौ शिरश्च प्रोक्षयेदित्यन्वयः । सकृदुपस्पृशेदोष्ठाविति सम्बन्धः । ओष्ठ[2]स्पर्शादनन्तरं दक्षः,—

अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकाभ्यान्तु चक्षुः श्रोत्रे पुनः पुनः ॥
नाभिं कनिष्ठाङ्गुष्ठाभ्यां हृदयन्तु तलेन वै ।
[3]सर्वाभिस्तु शिरः पश्चाद् बाहू चाग्रेण संस्पृशेत् ॥

प्रदेशिनी तर्जनी । अत्र आस्यं स्पृष्ट्वा पश्चाद् घ्राणं तदनन्तरं चक्षुषी पुनः श्रोत्रे पुनर्नाभिमित्यर्थः । [4]न तु चक्षुःश्रोत्रयोः स्पर्शनावृत्तिरिति [5]भ्रमः कार्य्यः । नाभिस्पर्शानन्तरं व्यासः,—पुनरपश्च संस्पृशेत् । हृदयस्पर्शादनन्तरं चात्मालम्भादुदकस्पर्शनम् । भविष्ये,—

यद्भूमावुदकं वीर समुत्सृजति मानवः ।
वासुकिप्रमुखान् नागान् तेन प्रीणाति पार्थिव ॥

शिष्टाः पठन्ति,—

तावन्नोपस्पृशेद् विद्वान् यावत्कच्छेन न स्पृशेत् ।

---

(1) D प्रमज्ज्यात् ।
(2) B D स्पर्शनानन्तरं दक्ष ।
(3) D सर्व्वाभिश्च ।
(4) A B C अनन्तर चक्षु ।
(5) A B C न भ्रम

मनु',—

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्रेण कदाचन ॥

ब्राह्मतीर्थस्य व्रणादिदोषे इदमनुकल्परूपं कायत्रैदशिकाभ्यामिति ।

अपः पाणिनखस्पृष्टाः पिबेदाचामति द्विजः ।
सुरापानेन तत्तुल्यमित्येवस्तुपिरब्रवीत् ॥

इति वचनान्नखस्पर्शपरिहारः कार्यः। कमण्डलूपस्पर्शनं सोमतीर्थेनेति [1]हारीतवचनादुद्धृतोदकेन कमण्डलोर्गृहीतेनाचमने सोमतीर्थाख्येन करमध्येन। [2]कमण्डलुशब्दस्य संस्थानवचन इत्युक्तं तेन ताम्रपात्रादिभ्योऽपि ग्रहणे तथा मन्तव्यम् ।

अतएव स्मरन्ति,—

कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोऽपि नैव शुद्धिमवाप्नुयात् ॥

कांस्यादिपात्राणामाकारेण [3]कमण्डलुत्वेन प्रसङ्गे निषेधः। अन्यथा प्रसङ्गाभावात्। आचामेदित्यनुवृत्तौ शङ्खलिखितौ,—उद्धृतपरिपूताभिरद्भिरवेक्षिताभिरनधिश्रिताभिरबुद्बुदाभिः शूद्राशुच्येकपाण्यावर्जिताभिः शूद्रावर्जिताभिरशुच्यावर्जिताभिरेकपाण्यावर्जि-

(१) B D • हारीतस्य वचनाद् • ।
(२) A कमण्डलुशब्दस्य अस्कार्यमित्युक्तम् ।
(३) B कमण्डलुप्रसङ्गनिषेध । D कमण्डलुप्रसङ्गे निषेध ।

नाभिश्च नाचामेत्। परिपूतत्वमपद्रव्यनिरासेन। आपस्तम्ब,— भूमिगतास्वप्स्वाचम्य प्रयतो भवति यद्वा प्रयत आचामेत्। एतेन स्वयमाहृतेनाचमन नास्तुविहेत्। वसिष्ठ,—

तस्मादुदकपाणिभ्यां परिमृज्य कमण्डलुम्।
पर्य्यग्निकरणं ह्येतत् मनुराह प्रजापतिः॥
कृत्वा चावश्यकार्य्याणि आचामेत् प्रयतस्ततः।

ततः कमण्डलोः। आपस्तम्ब,—न वर्षधारास्वाचामेत्। तथा प्रदरोदके। तत्राभिश्चाकारणात्। प्रदरः स्वयं दीर्णो भूभागः। अकारणाद् व्याधिव्यतिरेकेण। वसिष्ठ,—प्रदरादपि या आपस्तर्पणसमर्थाः स्युर्न वर्णरसदुष्टा या: स्युरशुभागमाः। बौधायन,—पादप्रक्षालनात् शेषेण नाचामेत् यद्याचामेद् भूमौ स्रावयित्वाचामेत्। आपस्तम्ब,—अभ्युदकशेषेण तथा कर्म्माणि कुर्य्यात्। आचामेद् वा [1]पाणिसंक्षुब्धोदकेन नाचामेत्। अग्निपर्य्युक्षणार्थोपात्तजलशेषेणेत्यर्थः। विष्णु,—

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः।
शुध्येरन् स्त्री च शूद्रश्च [2]सकृत्स्पृष्टाभिरन्ततः॥

अन्ततः ओष्ठप्रान्ते। ब्राह्मे स्त्रीशूद्राधिकारे,—आप्लनाञ्च करोष्ठयोः। शूद्राधिकारे [3]गोतम,—आचमनार्थे पाद[4]प्रक्षालन-मेवैके।

(१) D पाणिसंक्षुब्धोदकं नाचामेत्।
(२) D सकृत् स्पृष्टाभि॰
(३) D गोतम —
(४) D चाचम॰

## आचमनक्रमः ।

दक्षिणपूर्व्वक्रमेण पादप्रक्षालनं प्राङ्मुखत्वेन । [1]पित्र्याचमनाङ्गपादप्रक्षालनमुदङ्मुखत्वेन वा । आमणिबन्धात् पाणिप्रक्षालनम् । शिखाबन्धनम् । यज्ञोपवीतानुसन्धानम् । वासोद्वयधारणम् । उष्णीषशिरःकण्ठप्रावरणपरीहारः । उपानत्पादुकात्यागः । भोजनान्तराचमनव्यतिरिक्ताचमने आसनत्यागः । न प्रौढ़पादत्वम् । [2][शुचिदेशे पादद्वयदानम् । ] दिशां हृदयस्य चानवलोकनम् । गमनोत्थानप्रह्वताशयनकम्पनहासत्वरात्यागः । केशनीवीनाभ्यधोभागपरदेहभूमीनां हस्तेन स्पर्शनपरीहारः । स्नानाङ्गाचमनेऽन्तरेकं वहिरेकं पादं दत्वा । पुरुषार्थाचमनेऽप्यार्द्रवस्त्रस्य जलमध्येऽपि जानुदघ्ने तदधिके वा । वाग्यतः समाहितचित्तः प्रसन्नचेता भवेत् । उर्व्वोरन्तर्बाहुकरणम् । संहताङ्गुलि गोकर्णाकृति हस्तकरणम् । कांस्यायसत्रपुसीसपित्तलव्यतिरिक्तस्वकीयदारवतैजसान्यतमकमण्डलोरसम्भवे सम्मृज्य परकीयस्य वामहस्ते धारणम् । तत्र [3]वामहस्तशूद्रानीतव्यतिरिक्तपरजनानीतजलधारणम् । दिवोद्धृतमेव । असम्भवे अग्निदर्शनपूर्व्वकं[4]रात्रुद्धृतमपि । क्षीरबुद्बुदवर्णधाराद्रव्यान्तरसंसर्ग-

(1) D पित्र्याचमनाङ्गपादप्रक्षालनं दक्षिणाभिमुखत्वेन वा । दैवकर्माङ्गाचमनार्थं पादप्रक्षालनमुदङ्मुखत्वेन वा । कार्मांश •

(2) D Omits the portion bracketed

(3) D वामहस्तशूद्रव्यतिरिक्तशुद्धपरजनानीतजलधारणम् ।

(4) D. रात्र्यानीतमपि ।

दूषितपादचालनशेषव्यतिरिक्तम् । असम्भवे पादचालनशेषमव-स्थावितैकदेश नखसस्पृष्टाग्निपर्युषणशेषप्रदरोदकभिन्नं प्रदरादपि गोहप्तिसमर्थादविकृतरसगन्धं जलं कमण्डलोर्हस्ते कार्य्यम् । वामहस्तेन दक्षिणहस्तस्पर्शनम् । तोयस्य वीक्षणम् । करमध्येन सोमतीर्थेन पानम् । यथा हृदयं यावद् गच्छति । एव द्विरपरं त्रिर्वा । भूमिष्ठादोद्दृष्टोदक गोकर्णाकृतिहस्तेनादायाङ्गुष्ठकनि-ष्ठाभ्यां किञ्चिदवस्राव्य ब्राह्मतीर्थेन पानम् । तदसम्भवे प्राजा-पत्येन । तस्याप्यसम्भवे नखस्पर्शपरीहारेण देवतीर्थेन पानम् । कमण्डलोराचमने सोमतीर्थनियमः । मुखं संवृत्याङ्गुष्ठमूलेन द्विः परिमार्जनं त्रिर्वा । भोच्यमाणस्य द्विरेव । ततः सव्यपाणेः पादयोः शिरसः क्रमेण प्रोक्षणम् । मुख संहत्य संहृतमध्याङ्गुलित्रयेण द्विः सकृद् वा स्पर्शनम् । भोच्यमाणस्य सकृत् । तर्ज्जन्यङ्गुष्ठाभ्यां नासिकयो. । अनामिकाङ्गुष्ठाभ्यां नेत्रयोः श्रोत्रयोश्च । कनिष्ठा-ङ्गुष्ठाभ्यां नाभिं स्पृष्ट्वा जलस्पर्शनम् । सर्व्वाङ्गुलिभिः शिरः अङ्गुल्य-ग्रेण बाहुमूलद्वयस्पर्शनम् । भूमौ किञ्चिदुदकप्रक्षेपः । इन्द्रिय-स्पर्शनशेषजलस्य सव्यपार्श्वे प्रक्षेपः । ततः सर्व्वेश्वरस्य विष्णोः स्मरणम् । आदित्यसोमाग्नीनां यथासम्भवमीक्षणम् । एतच्च पुरीषोत्सर्गाचमनाद्ङ्गं 'न सर्व्वत्र । देवलः,—

रेतोमूत्रशकृच्छौचे भोजनेऽध्ययने स्थिते ।
शौचमेवविधं प्रोक्तमौपधान्यत्र वर्त्तते ॥

---

(1) B सर्व्वत्र ।

उक्तनिमित्तपञ्चकातिरिक्तनिमित्ते किञ्चिदङ्गसहितमप्याचमनं सगुणं भवति केवलं शिरःकण्ठप्रावरणमुक्तकच्छशिखायज्ञोपवीतत्वपादशौचानामावश्यकत्वम्। एतैर्विनाचमनं शुद्धिकरं न भवति। उक्तपञ्चनिमित्ते सर्वाङ्गादर इत्याहुः।

---

## अथाचमननिमित्तानि।

ब्राह्मे,—

क्षुते श्लेष्मपरित्यागेऽधीते वा भक्षिते सति।
अववर्णस्य सलापे स्वप्ने वा दन्तधावने॥
आचम्य प्रयतो भूत्वा ततः शुद्धो भवेन्नरः।

अधीते पाठे। [1]अववर्णस्य चण्डालादेः। हारीतः,—रथ्यामाक्रम्य कृतमूत्रपुरीषो भोक्ष्यन् (भोक्ष्यमाणः) वा पाणिपादं प्रक्षाल्याचामेत्। पैठीनसिः,—उच्छिष्टरेतोमूत्रसर्गे उत्सृज्याचम्य प्रयतो भवति त्रिः प्रक्षाल्य च तं देशम्। त देशमुच्छिष्टादिलिप्तम्। बोधायनः,—नीवीं विस्रंस्य परिधायोपस्पृशेत्।

वायुपुराणे,—

निष्ठीविते तथाभ्यङ्गे तथा पादावसेचने।
उच्छिष्टस्य च सम्भाषादशुच्यप्रयतस्य वा॥
सन्देहेषु च सर्व्वेषु शिखां मुक्त्वा तथैव च।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत्॥

---

(1) B. D अपवर्णस्यावण्डालादि।

सन्देहः आचमनं कृतं न वा । आचमननिमित्तं नवेति च । तथा,—

उच्छिष्टस्य च संस्पर्शे [1]दर्शने चान्त्यवासिनाम् ।

मनुः,—अध्येष्यमाणश्चाचामेत् । आपस्तम्बः,—रिक्तपाणिर्वायसमुद्यम्य अप उपस्पृशेत् । तथा,—श्वावातपर्यन्तावोष्ठौ चोपस्पृश्य । श्वावातपर्यन्तावलोमकौ । यमः,—

उत्तीर्योदकमाचम्य अवतीर्य उपस्पृशेत् ।

उत्तीर्य जलान्निष्क्रम्य । अवतीर्य जले प्रविश्य । हारीतः,—"नोत्तरेदनुपस्पृश्य" उत्तरेत् सन्तरेत् । देवलः,—

यदश्नः शौचनिर्मुक्तं चितिं प्राप्य विनश्यति ।

प्रक्षाल्याशुचिलिप्तञ्च स्पृष्टाचम्य विशुध्यति ॥

शौचनिर्मुक्तं [2]शौचस्थानादन्यत्र गतम् । संवर्त्तः,—

चर्म्मारं रजकं वेणं धीवरं नटमेव च ।

एतान् स्पृष्ट्वा नरो मोहादाचामेत् प्रयतोऽपि सन् ॥

आपस्तम्बः,—सिंहाणिकाद्यालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वाऽमेध्यञ्चोपस्पृश्याप्रयतञ्च मनुष्यं नीवीं च परिधायाप उपस्पृशेत् । आर्द्रं वा शकृदोषधिं भूमिं वा । अमेध्यं चतुर्विधम् । देवलः,—

दूषितं वर्जितं दुष्टं कश्मलञ्चेति लिङ्गिनाम् ।

चतुर्विधममेध्यं स्यात् सर्वं व्याख्यास्यते पुनः ॥

---

(१) B. D • दर्शनेऽप्यन्त्यवासिनाम् ।

(२) D शौचगानादन्यगतम् ।

शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते ।
अभक्ष्याभोज्यापेयानि वर्जितानीह यच्चते ॥
त्यक्ताः पतितचाण्डाला ग्रामकुक्कुटशूकरी ।
श्वा च नित्य विवर्ज्याः स्यु' षडेते धर्म्मतः समाः ॥
सव्रणः सूतिकासूतीमत्तोन्मत्तरजस्वलाः ।
मृतवत्सुरशुडश्च वर्ज्याश्चाष्टौ स्वकालतः ॥
नैचाम्बु विप्रुषः केशा निरस्तं नखलोम च ।
आर्द्रं चर्म्मेत्वगित्येतद् दुष्टमाहुर्मनीषिणः ॥
मानुषास्थि शवं विष्ठा रेतो मूत्रार्त्तवानि च ।
कुणपः पूयमित्येतत् कश्मलं समुदाहृतम् ॥
दूषिते प्रोक्षणेनापि शुचिवक्ता विधानत' ।
दुष्टे मार्जनसत्कारे. कश्मले सर्व्वथा भवेत् ॥

लेपापकर्षणादिभिर्यथोक्तशुद्धेः पूर्व्वं स्पर्शनमाचमननिमित्तम्। सव्रणोऽत्र कुष्ठभगन्दरादिरोगयुक्त'। सूती प्रसवकारयित्री। मत्तो मादकभक्षणेन। उन्मत्त उन्मादरोगी। मृतवत्सुर्मृतकार्य्योची। 'एतेषा यथोक्तशुद्धे पूर्व्वं स्पर्शनमाचमननिमित्तम्। अत्र सव्रण इति वचनात् क्षताशौच केचिदिच्छन्ति तन्न दुष्टव्रणविषयत्वेनोपपत्तौ व्रणमात्रेऽशौचकल्पनाभवकाशात्। दन्त-²लग्नाधिकारे च देवलवचनम्,—

---

(१) D एषां • ।
(२) D • लग्नाधिकारे देवल • ।

न तत्र बहुशः कुर्य्याद् यत्नमुद्धरणे पुनः ।
भवेदशौचमत्यर्थं त्वग्वेधाद् व्रणे कृते ॥

इति रुधिरस्य मुखप्रदेशादत्यन्ताशौचप्रतिपादनार्थम् । कालिकापुराणवचनात्तु न क्वचिन्निबन्धे क्वचिद्देशे चादरो दृश्यत इति [1]चेपशङ्के(व)नावतिष्ठते । देवलः,—

ततः [2]शरीरयोत्रेभ्यो मलनिःस्यन्दविस्रवात् ।
अन्नादीनां प्रवेशाच्च स्यादशुद्धिर्विशेषतः ॥

तथा,—

शौचलक्षणमित्याहुर्मृदम्भोगोमयादिभिः ।
लेपे स्नेहे च गन्धे च व्यपकृष्टे सुदूरतः ॥
पश्चादाचमनं चेति शौचार्थं कथ्यते विधिः ।

[3]शरीरयोत्रेभ्यः शरीरच्छिद्रेभ्यः । मलं द्वादशविधम् । निःस्यन्दो लालादि । तयोर्विस्रवः स्थानाच्चलनम् । अन्नादीनां प्रवेशो मुखद्वारा । [4]तेन भोजनादावशुद्धिराचमनेनापोह्यते । एतदाचमनं त्रिविधम्,—शुद्ध्यर्थं नैमित्तिकं कर्म्माङ्गञ्च । तत्र शुद्ध्यर्थाचमननिमित्तानि,—स्वकीयविण्मूत्ररेतसामुत्सर्गः । तेषां स्पर्शनम् । अशौचोदकतदार्द्रभूमिस्पर्शनम् । क्षुतम् । श्लेष्मत्यागः । भोजनम् । पानम् । चाण्डालादिभाषणम् । निद्रा । दन्तधावनम् । अनृतभाषणम् । [5][ परुषभाषणम् । ] वस्त्रपरिवर्त्तनम् । रथ्याक्रम-

(1) 1. B C चेपशङ्कैवावतिष्ठते । (2) B शरीरस्रोतोभ्या॰ । (3) B शरीरस्रोतोभ्य॰ । (4) D तेन न भोजनादा॰ । (5) B Omits the portion bracketed

णम्। द्वादशविधमलानां स्वस्थानात् प्रच्यवनम्। मानुषेतरनिः-स्नेहपञ्चनखास्थिस्पर्शनम्। निर्लोमोष्ठादिदेशस्पर्शनम्। उच्छिष्ट-ब्राह्मणस्पर्शनम्। बुद्धिपूर्व्वकातिक्षुद्रनिःस्नेहमानुषास्थिस्पर्शनम्। चाण्डालादिस्पर्शनम्। चाण्डालादिस्पृष्टस्य बुद्धिपूर्व्वं स्पर्शनम्। अमेध्यलेपप्रदेशस्य निःक्षालनपूर्व्वकमाचमननिमित्तत्वम्। अस्थि-सञ्चयनादूर्द्धं रोदनम्। जलाशयप्रवेशः। तत उत्तरणम्। भुक्ता-मात्रवमनं चाण्डालोदक्यासूतकीपतितशवतत्स्पृष्टस्पर्शनम्। पर-कीयश्मश्रादिद्वादशविधमलस्पर्शनम्। रथ्याकर्द्दमस्पर्शनम्। भास-काक-वलाक-वानर-मार्जारखरोष्ट्र-श्व-शूकर-कुक्कुट-वराह-चैल-निर्णेजक-रजक-चर्म्मकृद्व्याधकैवर्त्ततैलकृत्सुराविक्रयिनटनपुंसक-वेश्यानां स्पर्शनम्।

नाभेरूर्द्धं करौ मुक्ता यदङ्गमुपहन्यते।
तत्र स्नानमधस्तात्तु क्षालनेनैव शुध्यति॥

इति वचना[1]दुत्तमाङ्गे स्नानमधिकम्। एवञ्च,—

एभिर्यदङ्गं संस्पृष्टं शिरोवर्ज्यं द्विजातिषु।

इत्यत्र शिरःपदं नाभ्यूर्द्धभागपरमेव। तथाचमनकृताकृत-सन्देहः। आचमननिमित्तसन्देहश्च। एतानि [2]शुद्धर्थाचमन-निमित्तानि।

(१) D • इत्तमाङ्गस्नान •।
(२) D शुद्धर्थान्याचमन •।

## अथ पुरुषार्थाचमननिमित्तानि।

व्यासः,—श्रमक्षतविक्षतश्वासः। ब्राह्मणस्पर्शनम्। अग्निस्पर्शनम्। गोस्पर्शनम्। लोष्टादिरहितस्य हस्तस्य पचिर्यं प्रत्युद्यमः। पादप्रचालनम्। शिखाबन्धनम्। नीवीविस्रंसनम्। वस्त्रपरिधानम्। यज्ञोपवीतबहिष्करणम्। स्नानं भोजनारम्भः। उच्छिष्टदोषरहितताम्बूलादिभक्षणम्। शयनारम्भः। श्मशानाक्रमणम्। अभ्यङ्गस्याशुचिकरत्वे मानाभावादेव तत्राचमनं पुरुषार्थः। [1]श्मशानाक्रमणं नाशुद्धिकरम्।

न च मेध्यतरं किञ्चित् श्मशानादिह विद्यते।

इति दानधर्म्मवचनात्। एतेषु निमित्तेष्वाच[2]मनस्य दुरितक्षयः फलम्। कर्म्माङ्गाचमनञ्च सामान्यतः

क्रिया यः कुरुते मोहादनाचम्यैव नास्तिकः।

इति वायुपुराणोक्तम्। विशेषतश्च

प्राणायामनं कृत्वा आचामेत् प्रयतोऽपि सन्।

इत्यादौ सन्ध्यान्तर्गतप्राणायामस्य निमित्तत्वम्। तत्त्वसागरसंहितायाम्,—

अर्चयित्वा महेशानमनाचम्य क्रियान्तरम्।
कुर्व्वन् किल्बिषमाप्नोति सत्यमीश्वरभाषितम्॥

---

(१) D श्मशानाक्रमणमपि नाशुद्धि०।
(२) D ०मनस्योपाचदुरित०।

तथा,—

आदित्यञ्च गणाध्यक्षं क्षेत्रपालञ्च पार्व्वतीम्।
आराध्याचमनं कार्य्यं सुधिया [1]कार्य्यसिद्धये॥
लङ्घयित्वा च निर्म्माल्यमेतेषां त्रिदशाधिप।
सद्य आचमनं कार्य्यं कर्म्मान्तरविशुद्धये॥

इत्यादौ [2]कर्म्माङ्गमाचमनम्। तथा श्राद्धे [3]पिण्डदानादौ कर्म्माङ्गमाचमनम्। अतएव पैठके दक्षिणामुख इति पादक्षालने दिङ्नियम उक्तः। यत्तु शुद्धर्य्याचमनमेव कर्म्माङ्गं न पृथक् कर्म्माङ्गमाचमनमस्ति। अतएव शिष्टाः कोपाधिकरणे,—

वेदिरेव ह्यनाचम्य कुर्व्वतो विगुणो भवेत्।
तामेव सगुणां कर्त्तुं शुद्धा न व्यवधास्यते॥

इति शुद्धर्य्याचमनस्य [4]क्रमविरोधो विचारितः। तदयुक्तं तत्र तत्र कर्म्माङ्गाचमनमध्ययनाङ्गमेव। एवञ्च क्षुताादौ शुद्धर्य्याचमनस्यापि न व्यवधायकत्वमित्यतिशयार्थम्। शुद्धेः कर्म्माङ्गत्वेऽपि तदर्थाचमनस्य न कर्म्माङ्गत्वम्। आहवनीयस्य कर्म्माङ्गत्वेऽप्या-

(१) D. ० कर्म्मसिद्धये।

(२) D कर्म्माङ्गाचमनम्।

(३) D पिण्डदानार्घ्यदानादौ कर्म्माङ्गाचमनम्।

(४) B. क्रमविशेषो ०। D. क्रमविशेषो विचारितः। तदुक्तं तत्र कर्म्माङ्गाचमनस्य दर्शितत्वात्। अतएव भाष्यकारेणापच्चो न कर्त्तव्यमित्यविशेषेणाङ्गत्वबोधकं वाक्यमित्युदाहृतम्। वार्त्तिककारेण ब्रह्मयज्ञाङ्गमाचमनं जपमालाङ्गमित्युक्तम्। अतएवाध्येष्यमाणस्यारम्भे प्रयतः सचित्यध्ययनारम्भे आचमनमध्ययनाङ्गमेव। एवञ्च ०।

धानस्य न कर्म्माङ्गत्ववत्। अतएव विध्यन्तरसिद्धत्वाच्छौचस्य च यथाशक्त्युपदम्भविषयत्वमिति। श्रौचाद्यपचार इव शौचापचारे न कर्म्माधिकारः। न चैवं निरग्नेरिवाशुद्धस्याधिकाराभावादग्निहोत्राद्यकरणे दोषाभावः स्यादिति वाच्यम्। शक्तिविषये न शुद्धत्तमप्रयतः स्यादित्यापस्तम्बवचनादशुचेरेव स्नानस्याधर्म्महेतुत्वादग्निहोत्रादिलोपवत्। शौचविलम्बे त्रिरात्रोपवासादिविधानाच्च। एवञ्च दैवात्मुख्यगौणकालयोः शौचाभावे कर्म्मलोपदोषो नास्ति। अशुच्यवस्थानदोषः स्यादेव। अशक्तौ नाशुचित्वदोषोऽपि। मुख्यकाले शुद्ध्यभावे गौणकाले शुद्धौ कर्म्माधिकारः स्यादेव। मुख्यकालेऽसन्निहिताग्नेर्गौणकालेऽग्निहोत्रवत्। यथा च शौचस्य [1]वैदिककर्म्मत्वेऽपि जननाद्यशौचेऽपि कर्त्तव्यत्वं तथा च तत्रैवोक्तम्।

---

## अथ द्विराचमननिमित्तानि।

याज्ञवल्क्यः—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्ते रथ्योपसर्पणे।

आचान्तः पुनराचामेत् [2]वासोऽपि परिधाय च॥

आपस्तम्बः,—भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत्। द्विः परिमृजेत्। सकृदुपस्पृशेत्। भोजनपूर्व्वाचमने द्विः परिमार्जननियमः। अन्यत्र द्विस्त्रिर्वा। ओष्ठस्पर्शनमत्र सकृदन्यत्र सकृत्

(1) C विहितकर्म्मे॰।

(2) B वासोऽम्बर॰।

[1]त्रिर्वा। पैठीनसिः,—कलिलकासश्वासापगमे रथ्याचत्वरश्मशानाक्रान्तेष्वाचान्तः पुनराचामेत्। कलिलं कठिनं श्लेष्म। श्वासो व्यायामादिकाले [2]विकृतः। चत्वरं [3]भूत्यादीनां बलिदानस्थानम्। शङ्खलिखितौ,—मूत्रपुरीषष्ठीवनादिषु शुक्तवाक्याभिधानेषु पुनरुपस्पृशेत्। शुक्तं परुषम्। आदिपदं शुक्रोत्सर्गस्याप्युपलक्षणम्। द्विराचमनाधिकारे वशिष्ठः,—

ओष्ठौ संस्पृश्य च तथा यत्र स्यातामलोमकौ।

स्नानम्। पानम्। क्षुतम्। स्वापः। भोजनान्तः। रथ्योपसर्पणम्। वस्त्रपरिधानम्। भोजनारम्भः। कठिनश्लेष्मत्यागः। कासः। विकृतश्वासः। चत्वराक्रमणम्। श्मशानाक्रमणम्। मूत्रोत्सर्गः। पुरीषोत्सर्गः। ष्ठीवनम्। शुक्रोत्सर्गः। परुषवाक्याभिधानम्। इत्यष्टादश द्विराचमननिमित्तानि। शुद्ध्यर्थे नैमित्तिके च यथासम्भवम्। [4]तत्र द्विराचामेदिति द्वित्वविधौ विधेर्नियमविशिष्टभावनाविषयत्वादितिकर्त्तव्यताया अपि द्वित्वं विधीयत इतीन्द्रियस्पर्शनमपि द्विः कर्त्तव्यमित्याहुः। वस्तुतो विधेर्भावनाविषयत्वेऽपि द्विराचामेदित्यत्रेतिकर्त्तव्यतांशस्याश्रवणेन धात्वर्थ[5]मात्रोपदेशेनैव द्वित्वविधिः। न चाचमनानुवादेन द्वित्वविधावाचमनेऽङ्गसाद्वित्वमुद्दिश्य विशेषणं विवक्षार्हम्। तथा च सति न तौ पशौ करोतीत्याज्यभागनिषेधस्य पश्वङ्गपुरोडाशे प्रसङ्गात्।

(१) D. द्विर्वा।
(२) A. B. C. विसृतः।
(३) A भूपादीनां॰।
(४) D. तत्र।
(५) D. मात्रोद्देशेनैव॰।

किञ्च यथायर्व्वणादौ काम्या इष्टयस्ता उपांशु कर्त्तव्या न तौ पणो करोति । दीक्षाः सोमस्य दक्षिणाः सोमस्येत्यादौ सर्व्वत्रेति-कर्त्तव्यताकप्रधानभावनायां विध्यन्वयेऽङ्गानामप्युपांशुत्वमाज्य-भागनिषेधो दक्षिणासम्बन्धश्च स्यादिति तत्तदधिकरणविरोधः । ननु चाचान्तः पुनराचामेदिति क्त्वाप्रत्ययस्य क्रियोपरमवाचित्वे [1]साङ्गाचमनक्रियोपरमवतः पुनराचमने कर्त्तृत्वविधानात् पूर्व्वा-चमनस्येन्द्रियस्पर्शादिसमाप्तावेव पुनराचमनं विधीयत इति चेत् न क्तदन्तानां भावनानभिधायित्वेन [2]धात्वर्थापवर्गविशिष्टस्यैव कर्त्तृत्वात् । नह्यभिषुत्य हुत्वा भक्षयतीत्याद्यभिषवहोमकर्त्तुर्भक्षण-विधानेऽपि साङ्गहोमभावनोत्तरं भक्षणम् । किन्तु होमाभिषव-धात्वर्थमात्रोत्तरत्वेन विध्युपपत्तावर्थाक्षिप्तभावनोत्तरत्वं न विधीयते । यच्चाग्निं चित्वा सौत्रामण्या यजेतेत्यत्र साङ्गाभि निवृत्तिः ग्रन्थार्थस्तत्राग्निमिति द्वितीयायुक्त्या चयनसंस्कार्यत्व मग्निस्थलस्य ज्ञातमिति साङ्गादेव संस्कारोत्पत्तेस्तथात्वम् । एव-माहिताग्निर्नीतं वदेदिति कर्म्मणि निष्ठाप्रत्ययात् साङ्गाधान-निवृत्तिः ग्रन्थार्थः । यत्तु दीक्षितधर्म्माणां साङ्गदीक्षापवर्गेऽनुष्ठान-मिति तत्र [3]दीक्षितत्वस्यालौकिकसंस्काररूपत्वात् साङ्गक्रियोपरम एव तत्संस्कारादिति विशेषः । नाचान्तत्वमलौकिकं माना-भावात् । किञ्च तथा सति पादप्रक्षालनमप्यावर्त्तेत । न च वहिः-

---

(1) A B C ध्याचमन० ।

(2) C धात्वर्थापवर्गविशिष्ट० । D धात्वर्थापवर्गावमर्षमात्रविशिष्ट० ।

(3) D दीक्षितत्वस्य लौकिक० ।

प्रयोगाङ्गत्वादनावृत्तिः । तत्कालेऽपि भावनान्तर्गतत्वेन द्विरावृत्ति-
विधौ तत् तत्रानुपपत्तेरिति । देवलः,—

रेतोमूत्रशकृच्छौचे भोजनेऽध्वपरिश्रमे ।
शौचमेवंविधं प्रोक्तमौपचान्यत्र वर्त्तते ॥

[1][शौचमाचमनम् ।] रेतोमूत्रशकृच्छौचे भोजनाध्वगमनेषु
यथोक्त[2]सर्व्वाङ्गोपेताचमननियमः । उक्तपञ्चनिमित्तादन्यत्र किञ्चि-
दङ्गरहितानुष्ठानेऽप्यवैगुण्यम् । यद्यपि नित्यत्वेन यथाशक्त्यङ्गोप-
संहारः सिद्ध एव तथापि वचनात् शक्तिकृताङ्गहानेऽप्यवैगुण्यम् ।
केवलम्,—

शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत ॥

इति व्यासवचनात् । तथा,—विना यज्ञोपवीतेन, बहिर्जानु-
रेकहस्तार्पितैर्जलैः सोपानत्कस्थितश्चैव शुद्धिमवाप्नुयादिति भविष्य-
पुराणादिति ।

कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोऽपि नैव शुद्धिमवाप्नुयात् ॥

इति च । एतेषामङ्गानां सर्व्वत्रावश्यकत्वमित्याहुः । अङ्गाना-
चरणनिन्दाया अर्थवादत्वेन कथमेवमिति विचारणीयम् । [इत-
राङ्गाणां शक्तावपि त्यागो बद्धशिखत्वादीनामशक्तौ त्यागेन दोष
इति वा ।][3]

---

(१) D Omits the portion bracketed. (२) A B C. सर्व्वाङ्गाचमन • ।
(३) B D Omit the portion bracketed.

## अथाचमनानुकल्पाः ।

आपस्तम्बः,—स्वप्ने क्षवथौ [1]सिंहाणिकालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वा[2][ऽमेध्यञ्चोपस्पृश्याप्रयतं मनुष्यं नीवीञ्च परिधाय अप उपस्पृशेत् [3]आर्द्रं वा शकृत् ओषधिं भूमिं वा । उक्तनिमित्तेष्वाचमनासम्भवे आर्द्रगोमयस्पर्शनम् । तदभावे आर्द्रतृणस्पर्शनम् । पराशरः,—

क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥
प्रभासादीनि तीर्थानि ] गङ्गाद्याः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥
आदित्यो वरुणः [4]सोमो वायुरग्निस्तथैव च ।
विप्रस्य दक्षिणे कर्णे नित्य तिष्ठन्ति देवताः ॥

एतद्वाक्यशेषात् सर्व्वत्राचमननिमित्ते दक्षिणकर्णस्पर्शनमनुकल्पः । [5]एषु निमित्तेष्वप्रशमनुकल्परूपणमिति वाक्यान्तरेणाचमनस्यैव विधानात् । दन्तश्लिष्टेचाचमनविध्यभावात् कर्णस्पर्शनं मुख्यम् ।

---

(१) D सिङ्घाणिकाश्रुलम्भे० ।

(२) D Omits the portion bracketed.

(३) B. आर्द्रं वा शकृत् ० ।

(४) B C D, ० सोम अग्निर्वायुस्तथैव च ।

(५) A. B. C एषु च निमित्तेष्वप्रशमनुकल्परूपमिति वाक्यान्तरेणाचमनस्यैव विधानात् । दन्तश्लिष्टेचाचमनविधानाभावात् कर्ण ०

मार्कण्डेयपुराणे,—

क्षुत्वा निष्ठीव्य वासश्च परिधायाचमेद् बुधः ।
कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् ॥
कुर्व्वीतालम्भनं [1]वापि दक्षिणश्रवणस्य च[2] ।
अविद्यमाने पूर्व्वोक्ते उत्तरप्राप्तिरिष्यते ॥

क्षुतष्ठीवनवस्त्रपरिधानेषु प्रथमकल्प आचमनम् । तदसम्भवे गोपृष्ठस्पर्शनम् । तदसम्भवे सूर्य्यदर्शनम् । तस्याप्यसम्भवे दक्षिण-कर्णस्पर्शनमिति । [3][ यत्तु ] स्मृत्यन्तरे,—

गङ्गा वै दक्षिणे कर्णे नासिकायां हुताशनः ।
[4]उभावपि च स्प्रष्टव्यौ तत्क्षणादेव शुद्ध्यति ॥

इति तदुक्तनिमित्तादन्यत्राचमनानुकल्परूपमित्याहुः ।

क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने ।
कर्म्मस्थ एषु नाचामेद् दक्षिणं श्रवणं स्पृशेत् ॥

इति रत्नाकरलिखितवाक्यात् कर्म्ममध्ये एषु नाचमनं कर्णस्य स्पर्शनं [5]मुख्यकल्पः ।

---

(१) D ० चापि ० ।
(२) A. D ० तु ।
(३) D Omits the portion bracketed.
(४) B. उभावपि तु ० ।
(५) D अनुकल्प ।

## अथाचमनापवादाः।

अत्राङ्गिरसौ,—

मधुपर्के च सोमे च अप्सु प्राणाहुतिषु च।

नोच्छिष्टस्तु भवेद् विप्रो यथाऽऽत्रेर्वचनं तथा॥

अत्राप्स्विति प्राणाहुतिसाहचर्य्यादापोशानविषयमिति लक्ष्मीधरः। तदन्यजलपाने [1]त्वाचमनम्। शातातपः,—

दन्तलग्ने फले मूले भक्ष्यस्नेहे तथैव च।

ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः॥

फले मुखशुद्धार्थे कटुतिक्तकषायादौ। [2]अत्र शुद्धार्थमाचमनं नास्ति। नैमित्तिकं स्यादेव। अतएव भट्टाः,—परस्परस्पृष्टताम्बूलभक्षणं तदवसानानाचमनञ्च दुराचार इत्याहुः। गौतम',—दन्तश्लिष्टे दन्तवदन्यत्र जिह्वाभिमर्षात्। प्राक्च्युतेरित्येके। च्युतेरास्रावबन्निगिरन्नेव तत् शुचि'। अत्र च जिह्वाभिमर्षणात् यावज्जिह्वया दन्तेभ्यो भेदो नोपलभ्यत इत्यर्थः। सत्यपि जिह्वाभिमर्षणे यावन्न च्यवते तावत् शुचिरित्येके मन्यन्ते। च्युतेरास्रावबत् लालावत्। निगिरन्नेव तत् शुचिः। देवलः,—

भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत्।

दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत्॥

वशिष्ठ,—न श्मश्रुगतलेपः। अशुचिरित्यर्थः। तथा,—यश्चाप्यन्तर्मुखे आचान्तस्यावशिष्टं निगिरन्नेव तत् शुचिः। आचा-

(१) D ऽप्याचमनम्।

(२) D मुखशुद्धार्थे यत्राचमनं नास्ति।

न्तस्य यदवशिष्यते मुखे दन्तलग्नातिरिक्तमपि तदपि निगिरन्नेव शुचिरित्यर्थः। पैठीनसिः,—भूमिगता विन्दवः परामृष्टाः पूताः। विप्रुषः शुद्धाः। द्वीरोमक्लिन्नेष्वाचामेत्। विन्दवः आचमनविन्दवः। परामृष्टाः स्पृष्टाः। पूता [1]नाप्रयत्नहेतवः। अङ्गे पतिता अपि रोमद्वयार्द्रभावमापादयितुं समर्था एवाचमननिमित्तं भवन्ति। याज्ञवल्क्यः,—

सुखजा विप्रुषो मेध्यास्तथाचमनविन्दवः।
श्मश्रु चास्यगतं दन्तश्लिष्टं त्यक्त्वा ततः शुचिः॥

मनुः,—

स्पृशन्ति विन्दवः पादौ य आचामयतः परान्।
भूमिगास्ते समाज्ञेया न तैरप्रयतो भवेत्॥

बृहस्पतिः,—

प्रचरन्नन्नपानेषु यद्योच्छिष्टमुपस्पृशेत्।
भूमौ निधाय तद् द्रव्यमाचान्तः प्रचरेत् पुनः॥
अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि।
कृत्वा मूत्रपुरीषन्तु द्रव्यहस्तो न दूष्यति॥
शौचन्तु प्रथमं कुर्य्यात् पादौ प्रक्षालयेत् ततः।
उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात्॥

मनुः,—

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्॥

---

(1) D. आप्रयत्नहेतवः।

इदमनन्य स्नानादिव्यतिरिक्तद्रव्यविषयमिति विश्वरूपः ।

इत्यग्निचिद्-वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे [1]आचमनकल्पः ।

---

## दन्तधावनम् ।

वृद्धशातातपः,—

मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात् सर्व्वप्रयत्नेन भक्षयेद् दन्तधावनम् ॥

अत्र भक्षयेदिति पूर्व्वोत्तराचमनरूपभक्षणधर्म्मप्राप्त्यर्थमिति लक्ष्मीधरः । यद्यपि भोजनस्य दृष्टार्थस्याचमनं नाङ्गं [2]तथाप्य-दृष्टार्थप्राणाहुत्यङ्गत्वादतिदेशः । छन्दोगपरिशिष्टे,—

नारदाद्युक्तवार्क्षमष्टाङ्गुलमपाटितम् ।
सत्वचं दन्तकाष्ठं स्यात् तदग्रेण प्रधावयेत् ॥
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥
आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वं नो धेहि वनस्पते ॥

---

(१) B. आचारकल्प । H आचमनानुकल्प ।
(२) C तथापि दृष्टार्थे • ।

नारदेति नारदमिवाग्न्योक्तद्वयसम्भवम्। नारदः,—

आम्रपालाशबिल्वानामपामार्गशिरीषयोः।

वदरस्य कदम्बस्य करवीरकरञ्जयोः॥

सर्व्वे कण्टकिनः पुण्याः चीरिणश्च यशस्विनः।

[1]नरसिंहपुराणे,—

खदिरश्च करञ्जश्च कदम्बश्च वटस्तथा।

तिन्तिड़ी [2]वेणुपृष्ठञ्च आम्रनिम्बौ तथैव च॥

अपामार्गश्च बिल्वश्च अर्कश्चोदुम्बरस्तथा।

तथा,—

षष्टाङ्गुलेन मानेन तत्प्रमाणमिहोच्यते।

प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत्॥

विष्णुः,—न दक्षिणापरागामुखः। उदङ्मुखः प्राङ्मुखो वा। वटासनार्क-खदिरकरञ्ज-करवीर-सर्ज्जारिमेदापामार्गमालतीवकुल-कुरुविन्दानामन्यतमं कषायं कटुतिक्तं वा कनीनिकाग्रोर्द्ध्व सकूर्चं द्वादशाङ्गुलं

प्रातर्भुक्त्वा च यतवाक् भक्षयेद् दन्तधावनम्।

हारीतः,—काले पालाशकोविदारश्लेष्मातकतिल्वकशाकहृषच-गिरण्डीवेरणवर्जम्। प्रथमासकवदरीकरञ्जगम्यशलकानील्येके। दधित्यहरीतकप्रकर्षयानागनकानीत्यपरे। निम्बखदिराम्र-पालाशशिरीषापामार्गाणामेकतममनार्द्रं नातिसूक्ष्मं नातिस्थूलमा-

(1) C. D मार्कण्डेय०।

(2) C. ०वेणुवेतस आम्रनिम्बौ तथैव च।

पौथितायमनोष्ठयन्थ्युदङ्मुखो वाग्यत आसीनो दन्तकाष्ठं भक्षयेत्। काले उषःकाले। तिल्लकः बिल्वकः। शाकवृक्षः शागवन इति प्रसिद्धः। शिखण्डी मयूरशिखा। दधित्थः कपित्थः। एके अपरे इत्युभयत्रापि 'वर्जयित्वेति शेषः। पलाशः आम्रातकवृक्षः। आर्द्रं सद्यश्छिन्नं ततोऽन्यदनार्द्रम्। आपौथितायमीषच्चूर्णितायम्। अनोष्ठग्रन्थि दन्तधावनकाले ओष्ठसमीपग्रन्थिरहितम्। विष्णुः,—न पालाशं दन्तधावनं स्यात्। न श्लेष्मातकारिष्टविभीतकधवधन्वनवर्ज्यम्। न कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलवर्ज्यम्। बन्धुकनिर्गुण्डीतिलतिलुकवर्ज्यम्। न पारिभद्राम्लिकामोचशाल्मलीपणवर्ज्यम्। न मधुरम्। नार्द्रं नोर्द्ध्वशुष्कम्। न शुषिरम्। न पूतिगन्धम्। न पिच्छिलम्। दन्तकाष्ठं भक्षयेदित्यर्थः। धन्वन. धमनः। पीलुः गुड़फलः। पारिभद्रः पालघोषा इति प्रसिद्धः। अम्लिका तिन्तिड़ी। ऊर्द्ध्वशुष्कं वृक्ष एव शुष्कम्। शुषिरं छिद्रयुक्तम्। धमनः धमन इति प्रसिद्धः। महाभारते,—

> प्रक्षाल्य हस्तौ पादौ च मुखञ्च सुसमाहितः।
> दक्षिणं बाहुमुद्धृत्य कृत्वा 'जान्वन्तरान्ततः॥
> क्षीरिणो वृक्षगुल्माद्या भक्षयेद् दन्तधावनम्।
> त्यज्यं सपत्रमग्रात'मूर्द्ध्वशुष्कञ्च पाटितम्॥

(१) D वर्जयित्वेत्यर्थ।
(२) D ० आन्वन्तरान्तत।
(३) १ ० मूर्द्ध्वशुष्कमपाटितम्।

त्वराहीनं ग्रन्थिमुखं तथा पालाग्रशीर्षकम् ।
ऋजु वितस्तिमात्रञ्च कीटाग्निभिरदूषितम् ॥

विद्याकरपद्धतौ,—

गुवाकस्तालहिन्तालौ तथा ताड़ी च केतकी ।
खर्जूरं नारिकेलञ्च सप्तैते तृणराजकाः ॥
तृणराजपलाशैश्च न कुर्य्यात् दन्तधावनम् ।

तथा,—

इष्टकालोष्टपाषाणैर्नखैरङ्गुलिभिस्तथा ।
मुक्ता चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम् ॥

वचना,—नाङ्गुलीभिर्दन्तान् प्रचालयेत् । अत्र ये क्षीरिणः कण्टकिनः प्रतिषिध्यन्ते तत्र विहितनिषेधे विकल्पापत्तेः पर्य्युदासः । एवं तिक्तकटुकषायाणां येषां निषेधस्तेषां पर्य्युदासः । तेनैतेषां निषेधाभावाद् विहितासम्भवे प्रतिनिधित्वेनोपादानम् । ये तु न क्षीरिणो न कण्टकिनो न तिक्तकटुकषाय[1]सुगन्धिनस्तेषां मात्रभावात् प्रतिनिधित्वेन प्राप्तानां प्रतिषेधः । यथा व्रीहि-यवविधानादेव माषनिवृत्तौ [2]अयज्ञिया माषा इति निषेधः प्रतिनिधिप्राप्तिविषयः । [3]तेनैषां न प्रतिनिधित्वेनापि ग्रहणम् । पालाशे तु विशेषतः

आसनं शयनं यानं पादुके दन्तधावनम् ।
वर्ज्जयेद् भूतिकामस्तु पलाशं नित्यमात्मवान् ॥

---

(१) A. D. ० सुगन्ध ० । (३) D. तेनैतेषां ० ।
(२) D. अयज्ञिया वै माषा ० ।

आसनादिसाहचर्य्यात् कषायचीरिल्वेऽपि न पर्युदास। किन्तु निषेध एवेति न प्रतिनिधित्वमपि। पारस्कर',—दन्तप्रचालनादीनि नित्यमपि अन्नाद्यायेतिमन्त्रस्तु न दन्तधावनाङ्गम्। छन्दोगपरिशिष्टे तु परिजप्य च मन्त्रेणेति काष्ठसंस्कारत्वेन मन्त्रजपविधिरिति भिन्नार्थत्वाद् द्वयोः समुच्चयः। विष्णुः,—

प्रचाल्य भंक्का तत्प्रच्यात् शुचौ देशे प्रयत्नत' ।

महाभारते,—

प्रचाल्य च शुचौ देशे दन्तधावनमुत्सृजेत् ।
पतितेऽभिमुखे सम्यक् भोज्यमाप्नोत्यभीप्सितम् ॥
ऐश्वर्यभङ्गमाप्नोति छिन्ने तदशुचौ भुवि ।

नरसिंहपुराणे,—

प्रतिपद्दर्शषष्ठीषु नवम्याञ्चैव सत्तमा ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥
अलाभे दन्तकाष्ठस्य प्रतिषिद्धे तथा दिने ।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति ॥

अत्र दन्तकाष्ठकार्य्ये मुखशुद्धौ गण्डूषविधाने परिधौ पशुं नियुञ्जीतेति यूपकार्य्ये पशुनियोजने परिधिविधौ 'पशुयूपनिवृत्तिवत्[1] [दन्तकाष्ठनिवृत्तौ प्रतिपदादितिथिषु दन्तकाष्ठनिन्दा गण्डूषप्ररोचनार्था। न च प्रतिषिद्धे दिने इति वचनात् प्रतिषेध एवायम्। अर्थान्निवृत्तौ प्रतिषेधवैयर्थ्यात्। [2]गिरा गिरेति ब्रूयादैर इत्योदय

(१) C यूपनिवृत्तिवत्। (२) A निगिरा •।
(३) C Omits the portion bracketed

मिति गिरापदविधानादेव गिरापदे निवृत्ते गिरापदनिषेधस्यार्थ-वादत्ववत् । ] तेन सङ्क्षेपेणार्थवादोक्ततिथिचतुष्टयानुवादार्थं प्रतिषिद्धपदम् । न च मुख्यार्थदन्तधावने काष्ठनिषेधपरमिदं वचनम् । नित्यदन्तधावनप्रकरणे बाधापत्तेः । [1]यदि तु,—

कुह्वष्टमीनवम्याञ्च षष्ठ्यादौ दन्तधावनम् ।
पर्णैरन्यत्र काष्ठैः स्यात् जिह्वोल्लेखः सदैव हि ॥

तत्र पत्राणां धावनसाधनत्वं गण्डूषेण सह [2]वैकल्पिकमुच्यते । तत्र व्यक्तं काष्ठस्यान्यदिनविषयत्वं न निषेधः । तेन प्रतिपदादिषु काष्ठेनापि सुखार्थदन्तधावने भोजनोत्तरादृष्टार्थदन्तधावने वा न कश्चिद्दोषः । यच्च महाभारते,—

भक्षयेच्छास्त्रदृष्टानि पर्व्वस्वपि च वर्जयेत् ।

इति [3]तत्रायं पञ्चपर्व्वसु शास्त्रदृष्टानीतिपदोक्तकाष्ठानां प्रतिषेध इति । न दन्तधावनप्रतिषेधः । तेन पर्व्वसु गण्डूषैरेव मुखशुद्धिः । प्रतिषिद्धे तथा दिने इति [4]नरसिंहपुराणे स्मृत्यन्तरोक्तप्रतिषिद्धदिनस्यापि ग्रहणात् । यद्यपि स्मृत्यन्तरे,—

श्राद्धे जन्मदिने चैव विवाहे मुखदूषिते ।
व्रते चैवोपवासे च वर्जयेद् दन्तधावनम् ॥
न भक्षयेद्दन्तकाष्ठमेकादश्यां नरेश्वर ।
आदित्यदिवसे चैव तस्मादेनो महद् भवेत् ॥

---

(१) A. यत्तु • D. यदि — इत्र • ।
(२) L. • विकल्प • D • वैकल्प • ।
(३) A D तत्रापि • ।
(४) D नरसिंहपुराणोक्तदूषणरोक्त • ।

इत्यत्रापि कर्म्माङ्गत्वेन दानहोमादिप्रतिषेधवत् याहा-यङ्गत्वेन दन्तधावनं काष्ठकरणकं प्रतिषिध्यते [1]इति वचनविहित निषेधे विकल्पापत्तिभयेन सुखार्थदन्त[2]धावनस्य निषेधकल्पना । अतएव,—

व्रतोपवासदिवसे खादित्वा दन्तधावनम् ।
गायत्रीशतमपूता अपः प्राश्य विशुध्यति ॥

इति कर्म्माङ्गभ्रमत्वे प्रायश्चित्तम् । एवञ्च भोजनोत्तरदन्त-धावनस्यापि तत्र निषेधः । सुखार्थदन्तधावनस्य भोगत्वादेव निषेधः । सर्व्वभोगविवर्जित इति वचनात् । अत्र दन्तधावनस्य प्रायत्याख्यकर्म्माधिकारसम्पादकादृष्टसिद्ध्यर्थत्वात् तदङ्गानां तदुप कारकत्वात् तदभावे वैगुण्य नाधर्म्म' । नित्यकर्म्मान्तरवदयक्ति-ज्ञताङ्गहानेऽपि फलोदयात् । एवमाचमनाङ्गानामपीत्युक्तम् । तद्-विधि,—प्राङ्मुखतयोदङ्मुखतया वोपवेशनम् । हस्तपादमुख क्षालनम् । आचमनम् । जान्वन्तःस्थदक्षहस्तेन दन्तकाष्ठधारणम् ।

आयुर्बलं यशो वर्च्चः प्रजापशुवसूनि च ।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वं नो धेहि वनस्पते ॥

इति काष्ठाभिमन्त्रणम् ।

अन्नाद्याय व्यूहध्वं सोमो राजा यमागमत् ।
स मे मुखं प्रमार्ज्यते यशसा च [3]बलेन च ॥

(१) A D इति च विहित ० D इति च विहितप्रतिषेधे विक ० ।
(२) D ० धावन इत्यस्य निषेधकल्पना ।
(३) A ० भगेन च ।

| | | | |
|---|---|---|---|
| Muntakhab-ut-Tawārīkh (Text) Fasc 1 15 @ /6/ each | Rs | 5 | 1 |
| Muntakhab-ut-Tawārīkh, (English) Vol I Fasc 1 7 Vol II, Fasc 1 5 and Index Vol III Fasc 1 @ /12/ each | | 12 | |
| Muntakhab-ul-Lubāb (Text) Fasc 1 19 @ /6/ each | | 7 | |
| Maāsir-i-Ālamgīr (Text) Fasc 1 6 @ /6/ each | | 2 | 4 |
| Nukhbatu-l-Fikr (Text) Fasc 1 | | 0 | 6 |
| Nizāmi's Khiradnamah-i-Iskandari (Text) Fasc. 1 2 @ /12/ each | | 1 | 8 |
| Riyāzu-s-Salātin (Text) Fasc 1 5 @ /6/ each | | 1 | 14 |
| Ditto (English) Fasc 1 3 | | 2 | 4 |
| Tabaqat-i-Nāsiri (Text) Fasc 1 5 @ /6/ each | | 1 | 14 |
| Ditto (English) Fasc 1–14 @ /12/ each | | 10 | 8 |
| Ditto Index | | 1 | 0 |
| Tarikh-i-Firuz Shahi of Ziyaū-d-din Barni (Text) Fasc 1 7 @ /6/ each | | 2 | 10 |
| Tarikh-i-Firuz Shahi of Shams-i-Siraj Aif (Text) Fasc 1 6 @ /6/ each | | 2 | 4 |
| Ten Ancient Arabic Poems Fasc 1 2 @ 1/8/ each | | 3 | 0 |
| Wis o Rāmin (Text) Fasc 1 5 @ /6/ each | | 1 | 14 |
| Zafarnāmah, Vol I Fasc. 1 9 Vol II Fasc 1 8 @ /6/ each | | 6 | 6 |
| Tuzuk-i-Jahangīrī (Eng) Fasc. 1 | | 0 | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS

| | | | |
|---|---|---|---|
| 1 | ASIATIC RESEARCHES Vol VII Vols XI and XVII and Vols XIX and XX @ 10/ each | 50 | 0 |
| 2 | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl ) @ /6/ per No and from 1870 to date @ /8/ per No | | |
| 3 | JOURNAL of the Asiatic Society for 1843 (12) 1844 (12), 1845 (12) 1846 (5) 1847 (12) 1848 (12) 1866 (7) 1867 (6) 1868 (6) 1869 (8) 1870 (8) 1871 (7) 1872 (8) 1873 (8) 1874 (8) 1875 (7) 1876 (7) 1877 (8) 1878 (8) 1879 (7 1880 (8) 1881 (7) 1882 (6) 1883 (*) 1884 (6) 1885 (6) 1886 (8) 1887 (7) 1888 (7) 1889 (10) 1890 (11) 1891 (7) 1892 (8) 1893 (11) 1894 (8) 1895 (7) 1896 (8) 1897 (8), 1898 (8) 1899 (8), 1900 (7) 1901 (7), @ 1/8 per No to Members and @ 2/ per No to Non Members | | |
| | N B — *The figures enclosed in brackets give the number of Nos in each Volume* | | |
| 4 | Centenary Review of the Researches of the Society from 1784 1883 | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan by R B Shaw (Extra No J A S B 1878) | 4 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No J A S B 1868) | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah by E Blyth (Extra No, J A S B 1875) | 4 | 0 |
| | Introduction to the Maithili Language of North Bihār by G A. Grierson Part II, Chrestomathy and Vocabulary (Extra No J A S B 1882) | 4 | 0 |
| 5 | Anis ul Musharrahin | 3 | 0 |
| 6 | Catalogue of Fossil Vertebrata | 3 | 0 |
| 7 | Catalogue of the Library of the Asiatic Society Bengal by W A Bion | 3 | 8 |
| 8 | Ināyah, a Commentary on the Hidāyah Vols II, and IV @ 6/ each. | 32 | 0 |
| 9 | Jawāmiu-l-ilm ir riyāzi, 168 pages with 17 plates 4to Part I | 2 | 0 |
| 10 | Khizānat-ul-ilm | 4 | 0 |
| 11 | Mahabhārata Vols III and IV @ 20/ each | 40 | 0 |
| 12 | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III with 8 coloured Plates, 4to @ 6/ each | 18 | 0 |
| 13 | Sharaya-ool-Islām | 4 | 0 |
| 14 | Tibetan Dictionary, by Csoma de Koros | 10 | 0 |
| 15 | Ditto Grammar | 8 | 0 |
| 16 | Kaçmiraçabdāmrta, Parts I & II @ 1/8/ | 3 | 0 |
| 17 | A descriptive catalogue of the paintings, statues, &c, in the rooms of the Asiatic Society of Bengal by C. R Wilson | 1 | 0 |
| 18. | Memoir on maps illustrating the Ancient Geography of Kasmir by M. A. Stein Ph D JI Extra No 2 of 1899 | 4 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts Fasc 1 29 @ 1/ each | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature by Dr R L Mitra | 5 | 0 |

N B—All Cheques Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only

**Books are supplied by V P P.** 17-1-04

इति मन्त्रमुपांशु पठित्वा दन्तघर्षणम्। काष्ठं चालयित्वा भंक्त्वा सम्मुखशुचिदेशे पातनम्। काष्ठान्तरेण जिह्वोल्लेखः। तोय गण्डूषैर्बहुशो मुखचालनम्। आचमनम्। दन्तकाष्ठं प्रत्याम्नातत्वेन गण्डूषकरणे सकृदेवाभिमन्त्रणम्। न प्रतिगण्डूषम्। मन्त्रस्य साधनसंस्कारत्वात् द्वादशसंख्यावच्छिन्नस्य गण्डूषस्य च साधनत्वात्। तत्र वनस्पतिपदस्य वृक्षपरस्य काष्ठे गौणत्वेऽपि साधनस्वरूपपरित्यागात् प्रकृतौ धान्यमसीति मन्त्रस्य तण्डुलपरत्वेऽपि तद्देवेमां समसीत्यूहवत् जलगण्डूष इत्यूहः कर्त्तव्यः। न च जपस्यार्थानपेक्षणान्मोहः। द्वितीयाश्रुत्या काष्ठस्य मन्त्रसंस्कार्य्यत्वादर्थज्ञानरूपदृष्टद्वारैव मन्त्रस्य काष्ठसंस्कारत्वम्। धावनमन्त्रस्त्वविज्ञात एव प्रयोक्तव्यः। अत्र चायुरादीनां फलत्वं यद्यपि मन्त्रवर्णात् कल्पितं तथापि मन्त्रस्य नित्यवदाम्नानात् तत्कामनाविरहेऽप्यनुष्ठानम्। तथा च षष्ठे,—तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषमित्यत्राधिकरणे योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति मन्त्रः द्वेष्याभावेऽपि नित्यवदाम्नानात् प्रयोक्तव्य इति। न च कामनाविरहेऽपि मन्त्रलिङ्गोक्तफलं किं न स्यादिति वाच्यम्। मन्त्रस्य [1]स्वयमप्रमाणत्वेन विध्यनुमानद्वारा तथात्वम्। विधिश्च प्रवर्त्तनारूपो नाकाम्यसाधने प्रवर्त्तयितुं शक्नोतीति कामनायां सत्यामेव फलम्। यथा मुमुक्षोरग्निहोत्राद्यनुष्ठानेऽपि न स्वर्गादिफलं कामनाविरहात्। यथा वा योगसिद्धौ फलान्तरस्य।

---

(1) D. स्वयमप्रमाणत्वेऽपि न विध्यनु॰।

[1][ तथा च—योगियाज्ञवल्क्यः,— ]

अस्नात्वा नाचरेत् कर्म्म जपहोमादि किञ्चन ।
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं शुभम् ।
सर्व्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥

दृष्टं मलापनयनद्वारा शुद्धिः । अदृष्टं नित्याचरणात् पापक्षयः ।

विष्णुः,—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि ।
पवित्राणां तथा जाप्ये दाने च विधिचोदिते ॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।
अम्मात्रेणाभिषिक्तस्य नश्यन्तीति च धारणा ॥

कालकर्णी दुःसहदुहिता बालविधवा । दुर्विचिन्तितं स्वानिष्टचिन्तनम् । अम्मात्रेण उद्धृतानुद्धृतसाधारणेन ।

याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जनाः ॥

शङ्खः,—

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढ़ास्नानं प्रकीर्त्तितम् ॥
अस्नातस्तु पुमान् नार्हो जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम् ॥

---

(1) A D. Omit the portion bracketed

विष्णुपुराणे,—

स्नाचान्तश्च ततः कुर्य्यात् पुमान् केशप्रसाधनम् ।
आदर्शाञ्जनमाङ्गल्यदूर्व्वाद्यालम्भनानि च ॥

मनुः,—

मैत्रं प्रसाधनञ्चैव दन्तधावनमञ्जनम् ।
पूर्व्वाह्ण एव कुर्व्वीत देवतानाञ्च पूजनम् ॥

देवीपुराणे,—

नेत्राञ्जनं निषेधेत्तु दन्तधावनपूर्व्वकम् ।

अत्र दन्तधावनानन्तरं केशप्रसाधनम् । तदनन्तरमञ्जनग्रहणम् । आदर्शादि पश्चात् । अञ्जनं सौवीराञ्जनमिति लक्ष्मीधरः । स्नातकधर्म्मत्वाच्च नित्यम् । अत्रैव वैश्यशास्त्रोक्ताञ्जनान्तरग्रहणमित्याहुः ।

इत्यग्निचिद्वाजपेयिनरसिंहविरचिते नित्याचारप्रदीपे दन्तधावनप्रकरणम् । श्रीः ।

---

ततः सम्यगरुणकिरणदर्शने प्रातःस्नानम् । दक्षः,—

[illegible]स्वेदसमाकीर्णः शयनादुत्थितः पुमान् ।
[illegible]मलिनः कायो नवच्छिद्रसमन्वितः ॥
[illegible]दिवारात्रौ प्रातःस्नानं विशोधनम् ।

[1][ तथा च—योगियाज्ञवल्क्यः,— ]

अस्नात्वा नाचरेत् कर्म्म जपहोमादि किञ्चन ।
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं शुभम् ।
सर्व्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥

दृष्टं मलापनयनद्वारा शुद्धिः । अदृष्टं नित्याचरणात् पापक्षयः ।
विष्णुः,—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि ।
पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।
अम्मात्रेणाभिषिक्तस्य नश्यन्तीति च धारणा ॥

कालकर्णी दुःसहदुरिता बालविधवा । दुर्विचिन्तितं स्वानिष्टचिन्तनम् । अम्मात्रेण उद्धृतानुद्धृतसाधारणेन ।

याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जनाः ॥

शङ्खः,—

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढ़ास्नानं प्रकीर्त्तितम् ॥
अस्नातस्तु पुमान् नार्हो जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम् ॥

---

(1) A D. Omit the portion bracketed

छन्दोगपरिशिष्टे,—

यथाहनि तथा प्रातर्नित्यं स्नायादनातुर. ।
दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत् तदमन्त्रवत् ॥
अत्यल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्म्मण. ।
प्रातर्न तनुयात् स्नानं होमलोपो विगर्हित. ॥

यथाह्नीति मध्याह्नस्नाने कर्त्तव्यतानिर्देश' । दन्तान् प्रक्षाल्येति दन्तधावनस्य प्राथम्यार्थत्वात्

कृतार्थयोस्तु सयोगे देशकालोपलक्षणम् ।

इति दन्तधावनानन्तर्य्यं प्रात.स्नानस्योक्तम् । अनातुर' स्नान वर्हिरुग्णरोगरहित । गृहे चेदिति तत्प्रात स्नान यदि केन चिन्निमित्तेन गृहे क्रियते तदा स्नानाङ्गमन्त्ररहितम् । अन्तर्जल जपमन्त्र स्यादेव । न च साङ्गस्नानस्य मन्त्रनिवृत्ति. कथञ्चनेति वाच्यम् । तच्छब्दवैयर्थ्यभयेन प्रधानमात्र'परामर्षितच्छब्देन प्रधान मात्रे मन्त्राधानविधे । एवञ्च प्रात स्नान नद्यादौ गृहे वौवृती दर्शनेति विकल्प । तथा च दक्ष',—सन्ध्यास्नानमुभाभ्यान्तु । सन्ध्यास्नान प्रात स्नानम् । उभाभ्यामुवृतानुवृताभ्याम् । प्रातर्न तनुयादिति प्रात सक्षेपविधिना स्नान कुर्यात् । विस्तारे होम लोपप्रसङ्गादतिविस्तरनिन्दया सक्षेपस्तुति । तथा च व्यास,—

प्रात सक्षेपत स्नान होमार्थं तद् विधीयते ।
मन्त्राचविधिनिष्पाद्य मध्याह्ने तत् सुविस्तरम् ॥

---

(1) D. • परामर्षितच्छब्देन प्रधानमात्रेण मन्त्राभावविधे ।

अत्रापि होमार्थं तद्विधीयत इत्यर्थवादः। यथा जामिवा एतद् यज्ञे क्रियते यदन्यथैव पुरोडाशावुपांशुयाजमन्तरा यजतीति पुरोडाशद्वयनैरन्तर्यदोषसमाधानार्थत्वेनान्तरोपांश्या-जविधौ दोषसमाधानस्यार्थवादत्वेनैकपुरोडाशीया(ना)मप्युपांशु-याजप्रवृत्तिः।

तथेह [1]होमार्थत्वस्यार्थवादत्वान्निरग्नेरपि प्रातः संक्षेपविधिः। न च वाक्यशेषेण साग्निविषयत्वनिर्णयः सन्देहाभावात्। एवञ्च प्रातःसंक्षेपविधिरेव। मध्याह्ने विस्तराशक्तस्य संक्षेपविधिः। एवं काम्येऽपि तीर्थस्नानादौ विस्तराशक्तस्य संक्षेपविधिरनुकल्पः। अनुकल्पस्याप्यतिदेशात्। अयन्तु विशेषः,—काम्ये विस्तरविधि-सामर्थ्ये संक्षेपकरणे न फलम्। नित्ये तु विस्तरसामर्थ्येऽपि संक्षेपकरणे प्रत्यवायाभावः। किन्तु न पापक्षयरूपफलम्। प्रभुः प्रथमकल्पस्येत्यत्र दुर्मतिर्विद्यते फलमिति [2]फलाभावस्य कथनात्। तथा च स्मरन्ति,—

स्नातस्य वह्नितप्तेन तथैव परवारिणा।
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत्॥

योगियाज्ञवल्क्यः,—

उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम्॥

उषस्यरुणोदये। सन्ध्यायां सूर्योदयात्प्राक्। एवञ्चोदिते

(१) D होमार्थस्यार्थ०।
(२) C. फलाभावकथनात्।

रवावित्यनुकल्पः । विष्णुः,—प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायादिति । [ अत्र च

य इच्छेद् विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्य द्वौ मासौ माघफाल्गुनौ ॥

इति विष्णूक्त मासद्वयविहितं प्रातःस्नानम् । यच्च—

तुलामकरमेषेषु प्रातःस्नायी भवेन्नरः ।

इति प्रातःस्नानम् । यच्च—

प्रातःस्नात्वा मुनिश्रेष्ठ शिवतीर्थेषु मानवः ।
अश्वमेधफलं प्राप्य रुद्रलोकञ्च गच्छति ॥

इति काम्यतीर्थस्नाम् । एवमादिषु प्रात.स्नाय्यरुणकिरणग्रस्ता प्राचीमवलोक्य स्नायादिति ][1] विष्णुना सर्व्वतः स्नानोद्देशेनारुणोदयकालविधानात् प्रातःस्नानादूर्द्ध सन्ध्यातः पूर्व्वमनुष्ठानम् । न तु काम्यस्नान नित्यस्य बाधक गोदोहचमसवदेकद्वारत्वाभावात् । दर्शपूर्णमासात् पूर्व्वप्रयुक्तप्रणयननिवृत्तिर्गोदोहचमसयोर्द्वारम् । तत्रापश्चमेकस्य बाध्यत्वमिति सावकाशदूरफलत्वाभ्यां चमसबाधः । नचेह तथा द्वार किञ्चिदस्ति द्वयोरदृष्टार्थत्वात् । किञ्च प्रात.स्नानस्य शरीरशुद्धिद्वारा कर्म्माधिकारसम्पादकत्वात् काम्यस्नानान्तरस्यापि [2]प्रात.स्नानानन्तरमेव काल इति कालभेदाच्च काम्यनित्यप्रात.स्नानयोस्तन्त्रेणानुष्ठानसम्भवः । न च—

---

(1) A Omits the portion bracketed

(2) D काम्यप्रात स्नानाकरणे सूर्य्योदयावधिजपरूपसन्ध्याकाध्यापत्ते । सन्ध्यानन्तरमेव काल इति कालभेदाच्च काम्यनित्यप्रात स्नानयोस्तन्त्रेणानुष्ठानसम्भव ।

सन्ध्याहीनोऽशुचिर्विप्रो ह्यनर्हः सर्व्वकर्म्मसु ।

इति वचनात् सन्ध्योत्तर काम्यप्रात.स्नानप्रसङ्गः । सन्ध्यायाः सूर्य्योदयावधित्वात् सूर्य्योदयोत्तरकालीनकर्म्मणामेव सन्ध्योत्तरत्वाधिकारसम्पादकत्वात् सूर्य्योदयात् पूर्व्वं सन्ध्या कृत्वा [काम्य][1] प्रात.स्नानकरणे सूर्य्योदयावधिजपरूपसन्ध्याबाधापत्तेः सन्ध्याहीनत्वेन सुतरामनधिकारः। नचाग्निहोत्रवचिरवकाशत्वम् ।

सन्ध्याकर्म्मावसाने × स्वय होमो विधीयते ।

इत्यादिवाक्यान्तराहोमस्य सन्ध्योत्तरत्व[2]वदिह तथावचनाभावेन सन्ध्याबाधकत्वाभावात् सन्ध्यातः पूर्व्वमेवानुष्ठानम् । नित्यकाम्याग्निहोत्रयोरेककर्म्मत्वात् स्वर्गार्थमग्निहोत्रकरणकालेऽग्निहोत्रकरणाभावस्य प्रत्यवायहेतोरभावात् । तत्कालेऽन्यकरणाभावाद्वा प्रत्यवायाभावो नतूपात्तदुरितक्षयरूप नित्याग्निहोत्रफलयोगसिद्धाधिकरणविरोधादित्युक्तमेव । एव माघस्नानमप्यनुदिते रवाविति पद्मपुराणवचनात् सन्ध्यात पूर्व्वं प्रात.स्नानादूर्द्ध्वमनुष्ठानम् । यत्तु,—

कार्त्तिक सकल मास [3]वहि स्नायी जितेन्द्रिय. ।
जपन् हविष्यभुग् दान्त सर्व्वपापै' प्रमुच्यते ॥

इति विष्णूक्त काम्यस्नानम् । तस्य प्रात कालविध्यभावात्

---

(१) D Omits the portion bracketed

(२) D • वदितरथा वचनाभावेन सन्ध्याबाधकत्वासम्भवात् • ।

(३) D • प्रात स्नायी • ।

सन्ध्योत्तर यदाकदाचिदनुष्ठानमिति [1]लक्ष्मीधरादय । यदा तु,—

कार्त्तिकेऽहं करिष्यामि प्रात स्नान जनार्दन ।

इति मन्त्रवर्णाच्छागो वा मन्त्रवर्णादितिन्यायेन प्रात काल अवधार्यते यदा (तदा) तस्यापि सन्ध्यात पूर्व्वमरुणोदयेऽनुष्ठान मिति । यत्तु शङ्खेन,—

नित्य नैमित्तिक काम्य क्रियाङ्ग मलकर्षणम् ।

क्रियास्नान तथा षष्ठ

इति स्नानषट्कमध्ये नित्य प्रात स्नान कर्म्मार्हतापादकमुक्त्वा [2]क्रियास्नानमुक्त

जप्तुकाम पवित्राणि अर्च्चिष्यन् देवतापितॄन् ।

स्नान समाचरेद्‌ यत्तु क्रियाङ्ग तत्प्रकीर्त्तितम् ॥

इति यदत्र कर्म्माङ्गत्वेन स्नान पृथक् विहितमस्ति तस्यानुवाद इति सन्ध्योत्तरमेव तस्यानुष्ठानम् ।

नित्य नैमित्तिक काम्य त्रिविध स्नानमुच्यते ।

तर्पणन्तु भवेत्तत्र अङ्गत्वेनेति निश्चितम् ॥

इति वचनान्नित्ये प्रात स्नाने मध्याह्नस्नाने तर्पण काम्य तीर्थादिस्नाने च । न तु क्रियाङ्गमलापकर्षणस्नानयोरिति । अतएव प्रात स्नानमधिकृत्य मार्कण्डेयपुराणे,—

---

1) D लक्ष्मीधर ।

2) D क्रियाङ्गस्नान • ।

शिरः स्नातस्तु कुर्व्वीत दैवं पित्र्यमथापि वा।

इत्यत्र प्रातःस्नाने काम्यस्नाने च मध्याह्नस्नानाङ्गत्वेन विहितानां नद्यादीनामेव स्नानदेशत्वमतिदेशात्। तथा च मध्याह्नस्नानदेशाः,—

नदीषु देवखातेषु तड़ागेषु सरस्सु च।
स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च॥

देवखातपदं देवसम्बन्धित्वेन प्रसिद्धपरम्। यथा भुवनेश्वरे विन्दुह्रदः। तड़ागः सहस्रधन्वन्तरमितः सहस्रेण तड़ागः स्यादिति[1] वचनात्। सरांसीन्द्रद्युम्नाच्छोदप्रभृतीनि। गर्त्ताः,—

धनुःसहस्राण्यष्टौ च गतिर्य्यासां न विद्यते।
न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः॥

इति छन्दोगपरिशिष्टोक्तलक्षणाः। शङ्खः,—

सरस्सु देवखातेषु तीर्थेषु च नदीषु च।
स्नानमेव क्रिया यस्मात् स्नानं पुण्यफलं स्मृतम्॥

स्नानमेव क्रियेति मध्याह्नस्नानपोड़शस्नाने क्रियापदवाच्यत्वा'दित्यर्थः। याज्ञवल्क्यः,—

स्नायान्नदीदेवखातह्रदेषु च सरस्सु च।

विष्णुः,—उद्धृताद्भूमिष्ठमुदकं पुण्यम्। स्थावरात् प्रस्रवणम्। तस्मान्नादेयम्। तस्मादपि साधुपरिगृहीतम्। सर्व्वत एव गाङ्गम्।

---

(१) D • दिव्याग्रव•।

वस्त्रपूततोयेन संस्राप्य पुनर्गन्धतोयेन संस्राप्य गोरोचनाकुङ्कुमकर्पूरचन्दनागुरुभिर्लेपयित्वा नीलोत्पलसहस्रेण तदर्द्धेन मालां कृत्वा पूजयेत्। तदलाभे तावत्पद्ममालया वा तावत्परिमितजातीचम्पकपाटलकर्णिकारपुन्नागश्वेतमन्दारमदनकुरवककदम्बमोगुल्लार्कनीपेश्वराणामन्यतमस्य मालया वा तत सम्पूज्य देवस्योपरि पुष्पमण्डपं कृत्वा चाज्यं वा सितागुरुगुग्गुलधूपं दत्त्वा गीतवाद्यादिभिः सन्तोष्य शालिपिष्टोद्भवपलविंशतिदीपैः घृतपूर्णैः सर्षपदधिदूर्वागोरोचनाक्षतयुक्तपात्रस्थैः नीराजनं कृत्वा गन्धपुष्पाभ्यां सम्पूज्य चन्दनलेपपङ्कं लिङ्गस्य मूर्द्ध्नि पुष्पैः सह दत्त्वा सूक्ष्मवस्त्रयुग्मं श्वेतं पीतं वा पट्टसूत्रेण परिधाय चामरदर्पणौ समर्प्य द्रोणस्य प्रस्थस्य वा आधारभूतं दत्त्वा जलपूर्णघटं वितानकिङ्किणी रत्नान्वितं जलं दद्यात्। चन्दनक्रमणं कृत्वा स्तोत्रैः स्तुत्वा प्रदक्षिणं कृत्वा पुनः प्रणम्य दशद्रोणपरिमितस्य शतद्रोणपरिमितं वा नानाविधभक्ष्यभोज्यलेह्यपेययुक्तं निवेद्य आचमनं कृत्वा ताम्बूलं निवेद्य पूजां समापयेत्। होमानामादौ सन्तोष्य मन्त्रं गत्वा सिद्धदिष्टे ()मन्त्र मन्त्रोत। आचार्याय होमा वरणे पूर्वं * * * * * (स) कि माथ्य मरणम। अन्ते हविष्याहारं ब्राह्मणभोजनं ( ) चाक्षिप्रावधारयेत्। घृताद्येकद्रव्येण महास्नानकरणे घृताभ्यङ्गं कृत्वा गन्धादिभूपान्तैः सम्पूज्य अष्टोत्तरसहस्रद्वयपलमितं घृतं दुग्धं वा सङ्कल्प्य तेन स्नपयित्वा शुद्धोदकेन संस्राप्य चतुर्विधजलैः * * मत् संस्नाप्य त * यस्नानादि सर्व( ) कार्यं ( ) इति शिवमहास्नानविधिः।

अथ शिवस्य दर्शनप्रदक्षिणनमस्कारादिफलम्।

भविष्यपुराणे —

विष्णुस्य दर्शने पुण्यं दर्शनात् स्पर्शनं वरम्।
सकृत् प्रसङ्गाद् वा दृष्टा सर्वपापैः प्रमुच्यते॥

स्कान्दे,— सुदूरमपि गच्छेत यत्र देवो महेश्वरः।
दृष्टा लिङ्गं महेश (स) मानवैः विमुच्यते॥
अज्ञानाकृतैर्दृष्टो मनोवाक्कायकर्मजैः।
पूजितं वा महेशानं पूज्यमानमथापि वा॥
दृष्टा प्रयाति वै मर्त्यो ब्रह्मलोकं न संशयः।
एकं पूजयते भक्त्या भक्त्या चान्यं प्रपश्यति॥
तुल्यमेव फलं ताभ्यां भक्तिरेवात्र कारणम्।
न प्राप्तेऽरवर्न शिवलिङ्ग (पद) शिवम॥

मध्येत् च याति सर्व्वस्मादधिका मतिमेव हि ।
मध्याह्ने च महादेवं दृष्ट्वा यज्ञफलं लभेत् ॥
सायाह्ने सर्व्वयज्ञानां फलं प्राप्य विमुच्यते ।
प्रदोषे शङ्करं दृष्ट्वा सर्व्वपापैः प्रमुच्यते ॥

स्कान्दे —

स्नातो यः पूर्व्वसन्ध्यायां सदा नाम्नभिगच्छति ।
स स्नातो यद्यस्वस्य (?) मन्त्री भवति वीर्य्यवान् ॥

तथा —

प्रातरुत्थाय * * वै * * * * व्यपोहति ।
आजन्मनस्तु मध्याह्ने सप्तजन्मकृतं निशि ॥
अर्द्धयामकृतं पापं दृष्ट्वा पश्यति सन्त्यजेत् ।
सोमनाथं जगन्नाथं दृष्ट्वा भूदा विकल्मषः ॥
जायते नात्र सन्देहः अपि चाण्डालयोनिजः ।

योगिनिधीये —

अङ्गुष्ठाङ्कितं कृत्वा बद्धा मुष्टिं तु दक्षिणे ।
पिण्डिकायां न्यसेत् लिङ्गमङ्गुष्ठेन च लङ्घयेत् ॥
* * मङ्गमन्त्राख्या स्पर्शेन भूतिमिच्छताम् ।

भविष्ये —

कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतने नरः ।
अश्वमेधसहस्रस्य शतस्य फलं लभेत् ॥

अन्यत्र च —

प्रदक्षिणत्रयं कुर्यात् प्रासादस्य समन्ततः ।
सव्यापसव्यन्यायेन मृदुना याति * * नरः ॥
पदे पदेऽश्वमेधस्य यज्ञस्य लभते फलम् ।
सव्यं व्रजेत् ततोऽसव्यं प्रणा * * * लङ्घयेत् ॥

अस्यानेकगुणविधानात् प्रकरणान्तरात् शिवस्तोऽपि सधर्म्मोक्तत्वादधर्म्मेऽपि भविष्यपुराणीयप्रदक्षिणेऽतिदेशात् सव्यापसव्यादिधर्म्मोपपत्तिः शिवप्रदक्षिणत्वावान्तरसादृश्यात् ।

एवम्भूतमना( ) कुर्यात् शिवे प्रदक्षिणत्रयम् ।
जिह्वयेन भवपर्व्विन तस्य पुनरुद्भवः ॥

अत्रापि धर्म्मप्रवृत्तिरेव । यदपि —

चण्डस्य वृषभस्यापि देवस्य च शुभार्थिभिः ।
मध्ये यात्रा न कर्त्तव्या मन्त्रविद्भिः क्रियामयम् ॥

इति ।

बाणेश्वरेऽमुलिङ्गे च सोमसूत्रं न विद्यते ।

इति च कृत्रिम एव लिङ्गे सोमसूत्रलङ्घने दोषः । सोमसूत्रप्रणालादिलङ्घने महद्वय नित्यपि सामान्य कृत्रिमपरमेव । तथापि पुरुषार्थदोषो बाणे स्वयमे + स्वयम्भवि) च माभूत् । स्वयंस्वयादिपुष्पप्रदक्षिणाविधि स्वादेशाविशेषात् । भविष्ये—

नमस्कृत्य महादेवमश्वमेधफलं लभेत् ।
प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्चयत् ॥
स या गतिमवाप्नोति न तां क्रतुशतैरपि ।

यत्र प्रणामपूर्व्वकाञ्जलिकरणं शिरसि फलाय विधीयते प्रणामनमस्कारयोर्भेदात् ।

जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामं देवस्य सर्व्वान् कामानवाप्नुयात् ॥

भविष्ये— अग्रपात्रं तथा पुष्पमन्यद्वा यागसाधनम् ।
स्वहीतां नैव कुर्वीत देवताया यदर्चितम् ॥
देवार्च्चनपरो कार्यवाहनानाञ्च मध्यतः ।
प्रदक्षिणं न कुर्वीत कुर्य्यात् सव्यस्य वाह्यतः ॥
प्रासादे मण्डपे गेहे वृषमूले वनेऽपि वा ।
पूज्यन्ते देवता यत्र तत्रैव विधिमाचरेत् ॥
पिवा कृत्वा जगत् सर्व्वं दृष्टिपातेन धारयेत् ।
यत् सम्भार्य्ये जगत् सर्व्वमग्निकार्येण तत्शुभे तु ॥

अग्निकार्य्यन्तु—

तैले होमं प्रकुर्व्वीत दधिमध्वाज्यसंयुते ।
अष्टोत्तरशतं चाज्यं मूलमन्त्रेण मन्त्रवित् ॥

इति वचनादेव (क) व्यंस । स्कान्दे —

इदन्तु परमं गुह्यं माघे देवि निवदयेत् ।
घर्म्मघर्म्मपुटं पूर्व्वं घ्रतस्य मधुनस्तथा ॥
घर्म्मशाला तु यो देवि यो मे नामानि कीर्त्तयेत् ।
षड्इंसामपाठस्य पञ्चयोदशयार्दप ॥

ऋग्वेदाय सर्व्वाय महादेवाय ते नमः ।
एतानि मम नामानि यः पठेच्छिवसन्निधौ ॥
तस्य मृत्युभयं नास्ति सत्यं सत्यं वदाम्यहम् ।
सकृदुच्चार्य्य रुद्रेति सर्व्वपापैः प्रमुच्यते ॥
हरेति कीर्त्तयेद् वापि ज्योतिष्टोमफलं लभेत् ।
भवेति कीर्त्तयेद् वापि सर्व्वे ( सर्व ) मेधफलं लभेत् ॥
सर्व्वेत्युक्त्वा नमस्कृत्य शिवलोके महीयते ।
वेदैरधीतैः किं तस्य महादेवेति यो वदेत् ॥
शिवेति सकृदुच्चार्य्य मोक्षमाप्नोति मानवः ।
अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा ॥
यः स्मरेदीशमीशानं न स पापेन लिप्यते ।

स्कान्दे,—

निर्म्माल्यं यो हि मे देवि शिरसा धारयिष्यति ।
अशुचिर्भिन्नमर्य्यादो नरः पापसमन्वितः ॥
नरके पच्यते घोरे तिर्य्यग्योनौ च जायते ।
महादापि शुचिर्भूत्वा निर्म्माल्यं यस्तु धारयेत् ॥
तस्य पापं महत् शीघ्रं नाशयिष्ये महामते ।

अत्र धारणाङ्गतया शुचित्वं विधीयते तेन अशुचिधारणे दोषः शुचित्वप्रदीपनार्थो न पुनरशुचेर्धारणे नरकपातः । केनचिदविहितरुद्रनिर्माल्यस्पर्शनमशुचेः स्नाननिमित्तपरम् । निर्म्माल्य(म) अपकर्षणादिविहितत्वात् तदा स्पर्शन ( म् ) स्नाननिमित्तम् । तेन शुद्धकाले धारणमशुद्धकाले त्यागः । निर्म्माल्यं स्नानविलेपनपुष्पमालादि न तु नैवेद्यम् । मत्स्ये —

रुद्राङ्गलग्नं — — — दद्यात् सर्व्वञ्च तत्पुष्पात् ।

इति निर्म्माल्यप्रतिपत्तिमुक्त्वा तस्मादूर्द्ध्वस्य शास्त्रम — — नैवेद्यस्य पृथक् प्रतिपत्तिविधानात् ।

यत्तु योगसिद्धौ,—

शिलानभ्रविलिङ्गानि यस्य भूपणताडनम् ।
गोभूहिरण्यवासादि देवद्रव्यहरात्मनम् ॥
नैवेद्यान्नपुष्पाद्यर्पितम् + यत्तु यत् ।
तन्मात्मसदुपभुक्तं निर्म्माल्यमभिधीयते ॥

शिवार्चाकृतनैवेद्यभक्षणं लङ्घनं तथा ।
दानञ्चादीक्षितस्यापि निषिद्धं त्र्यम्बकाज्ञया ॥

उभयथापि निर्माल्यधारणं शुचिना कार्य्यम् । नैवेद्यस्य निर्माल्यभिन्नत्वेन

न भुञ्जीत निवेद्यान्नं गणानाञ्च शिवस्य च ।

इति वाक्यान्तरात् तन्निषेधोऽस्त्येव ।

न धारयेत् क्वचित् शम्भोर्निर्माल्यं न च दापयेत् ।

धारयेत् उपयोगार्थं गृहादौ न रक्षयेदित्यर्थः । एवम्,—

क्रव्यादो जायते राजा(न्) + + भक्ष्य (?) भक्षणात् ।
लङ्घनात् चिडिङ्गानि स्यात्मिरध्याह्नोदके ॥

इति । अस्य प्रतिपादकत्वेऽपि स्मृत्यन्तरे शिवनिर्माल्यदानभक्षणनिषेधात् तदपेक्षितानिष्टफलं स्यादेव । अत्रापवादवाक्यं पठन्ति —

रत्नहेमास्थिलिङ्गेषु चले लिङ्गे महर्षिषु ।
शुक्तमपि न निर्माल्यं नाख्यासु प्रतिमासु च ॥

अत्र महर्षिपदेन वाणलिङ्गमुच्यते । तस्य स्वभावेन महर्षिपदसम्भावनया महर्षिपदयोग्यत्वसम्भवात् । शुक्त स्थूलतरेषु प्रासादं विना वहिःस्थापिताचलपलिङ्गेषु । आख्यास्विति प्रतिमाविशेषणं तेन शिवाख्यासु प्रतिमास्वित्यर्थः । तेन कृत्रिमस्थापितलिङ्गमात्रे दोषः । नाख्येति । अत्र प्रामाण्येऽपि स्वयम्भू वा(ण) चलरत्नहेमास्थिलिङ्गप्रतिमानैवेद्यमात्रस्य प्रतिमन्त्रान्तरविधानादेवाभयम् । अपवादवचनादपि कदाचित् भक्षणे न दोषः ।

यत्तु,—

पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम् ।
अनिवेद्य न भोक्तव्यं यस्मात्तदुपकल्पितम् ॥

इति तद्—दा (?) शिवभक्तस्य स्वभोज्ये शिवोपभुक्तचिन्ताभावपरमिति वदन्ति ।

अथ शिवस्य गन्धः ।

भविष्यपुराणे,—

यथानुलेपनं कृत्वा वरैर्गन्धैः सुगन्धिभिः ।
वर्षकोटिशतं दिव्यं शिवलोके महीयते ॥
गन्धानुलेपनं पुण्यं द्विगुणं चन्दनस्य च ।
चन्दनादगुरोर्ज्ञेयं पुण्यमष्टगुणं नृप ॥

अथ नैवेद्यम् ।

शालितण्डुलप्रस्थस्य कुर्यादन्नं सुसंस्कृतम् ।
शिवाय तच्चरुं दद्याच्चतुर्दश्यां विशेषतः ॥
सयावकशरापूपपायसं यावकं तथा ।
घृतपूरादिसंमिश्रमेवमादि प्रकल्पयेत् ॥
यावन्तस्तण्डुलास्तत्र नैवेद्ये परिसंख्यया ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥

गुडखण्डयुतघृतपाचितभक्ष्यनिवेदने फलं शतगुणम् ।
सर्जकापानकाद्यानां(म्) तथा फलं प्राप्यते । (?)

तद्वद्वासितजलस्य । स्कान्दे —

दक्षिणाय( न संक्रान्तौ) पायसं घृतसंयुतम् ।
निवेदयेद् यमेकं स मे न विषमो भवेत् ॥
चरवो दशसाहस्रा यावकाश्च चतुर्गुणाः ।
शिवाय चरवः सर्वे यावकार्द्धेन सम्मिताः ।
घृतपात्रं समं स्नाप्य ? दृढं प्रेक्ष्य च यत्नतः ।
मातुलुङ्गफलादीनि सुपक्वानि निवेदयेत् ॥
शिवाय तत्फलं तस्य यद्भक्ष्याणां निवेदने ।

तथा —

छत्त्रायामप्रदानेन यावत् सिक्थोऽमरैः सह ।
षोडशैवाब्दलक्षाणि वसेत् श्रद्धासमन्वितः ॥

अथ शिवप्रदेयानि ।

भविष्ये —

सर्वेषामेव पात्राणां परं पात्रं महेश्वरः ।
शिव भक्त स्तुतं अस्य बलिपूजानिवेदनम् ॥
एकान्ततोऽनन्तफलं तद्भवेत्तात सत्तम ।

तथा, —

वासांसि सूक्ष्मचित्राणि मानवानि सदूनि च ।
धूपितानि शिवे दद्याद् विकोशानि नवानि च ॥
यावत् तद्वस्त्रतन्तूनां परिमाणं विधीयते ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥

दक्षवाहौ शिखायां वा धार्य्यश्च चतुराननम् ॥
अधारणान्महादोष शिवस्तस्य दूरत ।
रुद्राक्षो धारणीयस्तु दीक्षितैश्चाप्यदीक्षितै ॥
नित्यं हेममयी धार्य्या मुद्रिका दक्षिणे करे ।
पद्मरागान्विता कार्य्या नीलेन रचिताऽथवा ॥
धार्य्ये विविधहेमाढ्ये कुण्डले रत्नमण्डिते ।
शिवमन्त्रा द्विजस्यैव कवराख्या(?)न्यपस्य च ॥
वैश्यानां शैवमन्त्रा च शूद्राणां + मन्त्रान्वितम् ।
यत्नाद्यदुर्ब्बलं भीतं दुर्गस्थं न परित्यजेत ॥
गवामुत्थापनं कार्य्यं मग्नानां कर्दमेषु च ॥
चोदको बोधकश्चैव मोक्षदस्तु तृतीयक ।
शिववत् पूजयेत सर्व्वान् यदपेक्षो यदा क्रमम ॥
य प्रेरकस्तु जन्तूनां गये प्रेतस्य चोदक ।
दीक्षागुरुर्मोक्षदस्तु बोधक शास्त्रदर्शक ॥

तथा —

स्नान पूजा जपो ध्यान होमश्चैव तु पञ्चम ।
इति नित्यं सदा कुर्यात पदयाक्ष विवर्ज्जयेत् ॥
पूजनीयो महादेवो नापर मनसा स्मरेत् ।
न वामहस्ते पूजा तु कर्त्तव्या मनसा यदि ॥
वामहस्तेन लिङ्गन्तु नैव स्पृशेत् कदाचन ।
वामाचारो न कर्त्तव्य शैव निन्दा च वर्ज्जयेत् ॥
न निन्दाकरणे देवो न शास्त्र शिवभाषितम् ।
शङ्करो नार्चितो यावत् तावदन्न न समाचरेत् ॥
शिववत् शिवभक्तास्तु द्रष्टव्या शिवमिच्छता ।
न शून्यमस्तं लिङ्गं सदा यायात् कदाचन ॥

इति श्रीमन्महोपाध्यायाभिधकृष्णाश्रमेयिनरसिंहविरचिते
नित्याचारप्रदीपे सामान्यशिवाराधनकर्माणि ।

---

[1]ब्रह्मणः ।

भविष्यपुराणे,—सम्मार्जने चान्द्रायणफलम् । लेपने अग्निष्टोमफलम् । मुखक्षालनम् । [ [2]दन्तधावनम् ।] पञ्चविंशतिपलमितघृतेनाभ्यङ्ग्य वर्षकोटिसहस्रार्जितपापक्षयः । यवगोधूमचूर्णैरुद्वर्त्तनम् । [3]तप्तेन शीतेन जलेन स्नानम् । स्नानकाले गीतनृत्यादि पूर्व्ववत्फलदम् । नीराजनं पूर्व्ववत् । कल्पकोटिसहस्रार्जितपापक्षयार्थं ब्रह्माणं घृतेन स्नापयेत् । शुक्लप्रतिपदि घृतस्नानादेकविंशकुलमुद्धृत्य ब्रह्मलोकप्राप्तिः । क्षीरस्नाने गवायुतदानफलम् । चतुःषष्टिपलपयसा स्नानं ब्रह्मलोकाप्तये । दध्ना स्नानाद् विष्णुलोकप्राप्तिः । इक्षुरसस्नानाद् ब्रह्मलोकप्राप्तिः । मन्त्रपूतकपिलापञ्चगव्यकुशवारिस्नानं पूर्व्वतः शतगुणम् । फलोदकस्नानादर्कसालोक्यम् । सर्व्वौषधिस्नानात् कामगविमानेन ब्रह्मलोकप्राप्तिः । गन्धचन्दनोदकेन स्नानाद्रुद्रलोकप्राप्तिः । पाटलोत्पलकरवीरपद्मानामेकतमोदक[4]स्नानाद् ब्रह्मलोकप्राप्तिः । कर्पूरागुरुतोयस्नानाद् ब्रह्मलोकप्राप्तिः । गायत्रीशतजप्तनिर्मलाम्भःस्नानं ब्रह्मलोकदम् । शीताम्बुना धारोष्णपयसा घृतेन च क्रमात् स्नपयित्वा

(1) ১. अथ ब्रह्मणो स्नानादिकर्म्माणि ।
(2) D. Omits the portion bracketed
(3) ১. उष्णेन शीतेन ।
(4) D. स्नानेन ।

पूजां कृत्वाश्वमेधसहस्रफलम् । स्नानपात्रविशेषात् फलवि
पूर्ववत् ।

ब्रह्मणो दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम् ।
स्पर्शनादर्चनं श्रेष्ठं घृतस्नानमतः परम् ॥ *

---

* ) Reads the following after this mark —

भविष्ये,—

यथानुलेपनं कृत्वा दिव्यैर्गन्धैः सुगन्धिभिः ।
वर्षकोटिशतं दिव्यं ब्रह्मलोके महीयते ॥
गन्धानुलेपनात् पुण्यं लेपनं चन्दनस्य च ।
चन्दनादगुरोश्चैव पुण्यमष्टगुणं नृप ॥
कृष्णागुरोर्विशेषेण द्विगुणं फलमादिशेत् ।
तस्माच्छतगुणं पुण्यं कुङ्कुमस्य विधीयते ॥
यः समालभते ब्रह्म चन्दनागुरुकुङ्कुमैः ।
कर्पूरवारिभिर्मिश्रैस्तथा कस्तूरिकान्वितैः ॥
वर्षाणां कोटिशतं विहृत्य त्रिदशालये ।
पुनः सञ्जायते भूमौ राजराजो न संशयः ॥
चन्दनागुरुकर्पूरैः श्लक्ष्णपिष्टैः सकुङ्कुमैः ।
ब्रह्मणोऽङ्ग(?) समालिप्य कल्पकोटिं वसेद् दिवि ॥
सर्वोक्तं तालवृन्तेन शुभगन्धैः प्रकल्पितम् ।
दशवर्षसहस्राणि वीर शिवपुरे वसेत् ॥
भक्त्या निवेद्य ब्रह्मार्थं तालवृन्तं नराधिप ।
दशवर्षसहस्राणि वीर शिवपुरे वसेत् ॥
मायूरव्यजनं कृत्वा ब्रह्मणेऽतीवशोभनम् ।
कल्पकोटिशतं पूर्णं प्रभञ्जनपुरे वसेत् ॥
दद्याद् ब्रह्मणे च परं (?) मणिरत्नविभूषितम् ।
हेमरौप्यादिदण्डं वा तस्य पुण्यफलं शृणु ॥
चामरव्यजनहस्ताभिर्दिव्यस्त्रीभिः परिवारितः ।
महागौरविमानस्थश्चिरं ब्रह्मपुरे वसेत् ॥

## [1]अथ विष्णोः ।

नरसिंहपुराणे,—

नरसिंहगृहे नित्य यः सम्मार्जनमाचरेत् ।
सर्व्वपापविनिर्मुक्तो विष्णुलोके स मोदते ॥
गोमयेन मृदा तोयै यः कुर्य्यादुपलेपनम् ।
चान्द्रायणफलं प्राप्य विष्णुलोके महीयते ॥
निर्माल्यमपकृष्याथ तोयेन स्नाप्य केशवम् ।
नरसिंहाकृति राजन् सर्व्वपापैः प्रमुच्यते ॥
[2]गोदानस्य फलं प्राप्य यानेनाम्बरगोमिना ।
नरसिंहपुरं प्राप्य मोदते कालमक्षयम् ॥

वराहपुराणे,—

यथाप्यालेपयेद् भूमिं गोमयेन दृढव्रत ।
तस्य दृष्ट्वा विलेपन्तु मम तुष्टिः प्रजायते ॥
लिप्यमानस्य विद्यन्ते यावन्तो जलविन्दवः ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
अभ्युक्षणं च यः कुर्य्यात् पानीयेन सुरालये ।
स शान्तपापो भवति नात्र कार्य्या विचारणा ॥
हरेर्गृहे सदा वस्तु तुलसीदलविप्रुषैः ।
विसन्ध्य प्रोक्षयेद् भक्त्या महापापैः प्रमुच्यते ॥

---

(१) अथ सकलदेवताराधनप्रयोजनमूलमात्मा विधिविष्णाराधनमभिधीयते ।
(२) गोसहदानफल ।

तथा,—

> कल्यमेव समुत्थाय हन्याद् भेरीं यथोदिताम् ।
> यदि भेरी न विद्येत कवाटं तत्र वादयेत् ॥
> दीपं न ज्वालयेद् यावत्तावद्देवं न संस्पृशेत् ।
> दीपं प्रज्वालयित्वा तु हस्तशौचन्तु कारयेत् ॥
> चरणौ वन्दयित्वा तु दन्तकाष्ठमुपानयेत् ।

तथा—

> निर्माल्य शिरसः कश्चिद् भक्त्या चापोह्य मानवः ।
> कुर्य्यात्तु मुखकर्म्माणि स्वच्छेन सलिलेन च ॥

अत्र द्वारोद्घाटनदन्तधावनादिषु वराहपुराणीयमन्त्राम्नानेऽपि प्रणवेन सर्व्वं करणीयम् । "यः प्रणवमधीते स सर्व्वमधीते" इति सर्व्वमन्त्रप्रत्याम्नातत्वेन तापनीयश्रुतौ [1]प्रणवस्य विधानात् । नरसिंहपुराणे,—

> गीतवाद्यादिकं नृत्यं शङ्खतूर्य्यादिनिःस्वनम् ।
> यः कारयित्वा विष्णोस्तु सन्ध्यायां मन्दिरे नरः ॥
> सर्व्वकालेऽविशेषेण कामगः कामरूपवान् ।
> स्वर्गात् स्वर्गमनुप्राप्य विष्णुलोके महीयते ॥

---

(1) Y. प्रणवविधानात् ।

## अथ स्नानम् ।

तत्र प्रथमभ्यञ्जनम् । वाराहे,—

शीघ्रमभ्यञ्जनं कुर्य्याद् दद्यात् तैलं घृतञ्च यत् ।

"अभ्यङ्गे पञ्चविंशती"ति पञ्चविंशतिपलमिततैलं घृतञ्च तावत् तथा शिरसि प्रदद्यात् पश्चात् दक्षिणाङ्गे ततो वामाङ्गे ।

[1]पश्चात् पृष्ठे पुनर्यैव पादौ पश्चात् कटिं तथा ।

एवमभ्यञ्जनानन्तरमुद्वर्त्तनम् । वाराहे,—

कलायस्यापि चूर्णेन पिष्टचूर्णेन वा पुनः ।
एतेनोद्वर्त्तनं कुर्य्याद् गन्धद्रव्यैश्च संयुतम् ॥

सारसिद्धे,—

[2]यवगोधूमचूर्णैश्च उद्वर्त्योष्णेन वारिणा ।
प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात् ॥
तोयेन भक्त्या संस्नाप्य विष्णुलोके महीयते ।
स्नाप्य दध्ना सकृद्विष्णुं [3]विष्णुलोकमवाप्नुयात् ॥
यः करोति हरेरर्चां स्नापनं मधुना नरः ।
अग्निलोके स मोदित्वा पुनर्विष्णुपुरे वसेत् ॥
घृतेन स्नापनं यस्तु पर्व्वकाले विशेषतः ।

---

(१) Y पश्चात् पृष्ठे तत पादयो ( ) तत कट्याम् । एवमभ्यञ्ज॰

(२) ) यवगोधूमजैश्चूर्णैरुद्वर्त्या॰

३) विष्णुलोके महीयते ।

नरसिंहाकृतेः कुर्य्यात् शङ्खभेरीनिनादितम् ।
पापं सकलमुत्सृज्य विष्णुलोके महीयते ॥
पञ्चगव्येन देवेशं यः स्नापयति भक्तितः ।
[1][ब्रह्मकूर्चविधानेन विष्णुलोके महीयते ॥]

[2]ब्रह्मकूर्चविधानं न परिमाणार्थं "स्नाने पलशतं ज्ञेय"मिति परिभाषणात् । किन्तु

गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि ॥
तेजोऽसीति घृतञ्चैव देवस्यत्वा कुशोदकम् ।

इति मन्त्रप्राशस्त्यर्थम् ।

पयः काञ्चनवर्णाया श्वेतायाश्चैव गोमयम् ।
गोमूत्रं ताम्रवर्णाया नीलायाश्च तथा घृतम् ॥
दधि च कृष्णवर्णाया एतद्वै पञ्चगव्यकम् ।
वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः ।
दध्नि वायुः सदा देवः सोमः क्षीरे घृते रविः ॥

पानीयं निर्मथ्य प्रणवेन मूलमन्त्रेण स्नानम् ।

पादपीठन्तु यो भक्त्या बिल्वपत्रेण घर्षयेत् ।
उष्णाम्बुना च प्रक्षाल्य सर्व्वपापैः प्रमुच्यते ॥
कुशपुष्पोदकस्नानाद् ब्रह्मलोकमवाप्नुयात् ।
रत्नोदकेन सावित्रं कौवेरं हेमवारिणा ॥

---

(1) १ Omits the portion bracketed

(2) ४. ब्रह्मकूर्चविधाने परिमाणार्थं स्नाने पलपञ्च ज्ञेयमिति परिभाषणात् ।

नरसिंहन्तु संस्नाप्य कर्पूरागुरुवारिणा ।
इन्द्रलोके स मोदित्वा पश्चाद् विष्णुपुरे वसेत् ॥
पुष्पोदकेन गोविन्दं स्नाप्य भक्त्या नरोत्तमः ।
सावित्रं लोकमासाद्य विष्णुलोके महीयते ॥

विष्णुधर्मे,—

आह्लादं निर्वृतिं स्वास्थ्यमारोग्यञ्च सुरूपताम् ।
सप्तजन्मान्यवाप्नोति नरः स्नानप्रदो हरौ ॥
(१)स्नानार्थं सुरभीक्षीरं महिष्याश्चास्तु वर्ज्जिताः ।
दुःस्वप्ननाशनं श्रेयममङ्गल्यविनाशनम् ॥
मङ्गल्यमुदितं दध्ना स्नपनं द्विजसत्तमाः ।
स्नाप्य दध्ना सकृद्विष्णुं विष्णुलोकमवाप्नुयात् ॥
गवां शतस्य विप्रेभ्यः सम्यग्दत्तस्य यत्फलम् ।
घृतप्रस्थेन तद् विष्णोर्लभेत् स्नानान्नसंशयः ॥
अयने विषुवे प्राप्ते यः स्नापयति केशवम् ।
घृतप्रस्थेन वै पापं सकलं स व्यपोहति ॥
पलं सुवर्णाश्चत्वारः प्रस्थः षोडशकं पलम् ।
वर्षकोटिसहस्रेण यत्पापं समुपार्जितम् ।
तद्घृताभ्यञ्जनाद् विष्णोर्दहेत् सर्व्वं न संशयः ॥

अभ्यञ्जन पञ्चविंशतिपलेन ।

रोगार्त्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।

(१) १ स्नानार्थे ।

भयान्मुच्येत [1]भीतश्च घृतेन स्नापयन् हरिम् ॥
प्रतिमासं सिताष्टम्यां घृतेन जगतीपतिम् ।
स्नापयित्वा समभ्यर्च्य सर्व्वपापैः प्रमुच्यते ॥
द्वादश्यां पञ्चदश्याञ्च गव्येन [2]माहिषेण वा ।
स्नपनं देवदेवस्य महापातकनाशनम् ॥

मधुना स्नानाद् विष्णुलोकप्राप्तिः । इक्षुरसेन विद्याधरलोकः । गुड़ेन स्नाने पापक्षयपूर्व्वकविष्णुलोकमहि(त)त्वम् । [3]वीजोदक-स्नानात् क्रियासाफल्यम् । पुष्पोदकेन श्रीलाभः । फलतोयेन क्रियासाफल्यम् । [4]पञ्चामृतस्नानं महापातकनाशनम् ।

तत्रैवम्,—

दुग्धेन दध्ना चाज्येन मधुना चैक्षवेण च ।
प्रत्येकं जलपुष्पाभ्यां धूपेनान्तरितं तथा ॥
प्रस्थःपलैश्चतुर्भिस्तु [5]सम्पूर्णं गडुकं स्मृतम् ।
गडुकश्चाष्टलोहोत्थः कर्षाभ्यधिकपट्पलैः[6] ॥
गडुकानि जलस्याथ प्रदेयानि यथाविधि ।
शतञ्चाष्टोत्तरञ्चैव तथाचाष्टौ सदैव हि ॥

---

(१) Y भीतस्तु ॰
(२) Y हविषा न्वप ।
(३) V वीजोदकेन स्नानात् ॰
(४) Y पञ्चामृतस्नानेन महापातकनाश ।
(५) Y सम्पूर्णगडुक ॰
(६) Y पट्पदे ।

अनुक्तपरिमाणस्नाने पलशतम् ।

मृत्कुम्भात् ताम्रकुम्भेस्तु स्नानं दशगुणं स्मृतम् ।
रौप्यैर्नैश्चोत्तर प्रोक्तं हैमैः कोटिगुण भवेत् ॥
जलाढकसुपूरांस्तु लोहजान् कारयेद् घटान् ।
अष्टाविंशाधिकशतपलपूरास्तु मार्त्तिकान् ॥

स्कान्दे,—

शङ्खस्थितेन तोयेन यः स्नापयति केशवम् ।
कपिलाशतसहस्रस्य दत्तस्य फलमश्नुते ॥

अक्षतपुष्पान्वितशङ्खतोयस्नानात् पूर्व्वकृतपापक्षयः । तिल-कुसुमयुतशङ्खतोयस्नानाद् विष्णुलोकप्राप्तिः । अष्टाक्षरेण शङ्खस्थित-गन्धोदकस्नानान्मोक्षः । शङ्खस्थतीर्थजलस्नानात् कुलशतोद्धारः । शङ्खस्थितकपिलाक्षीरस्नानाद् यज्ञायुतसहस्रफलम् । "अश्विनी-र्भैषज्येन" इति "अभिषिञ्चामि" इत्यन्तेन स्नानकाले नृत्यादि-करणम् । [[1]स्कान्दे],

कृष्ण सन्तोषयेद् यस्तु सुगीतैर्मधुरैः स्वरैः ।
सामवेदफल तस्य जायते नात्र संशय' ॥
यो नृत्यति प्रहृष्टात्मा भावे बाह्ये च भक्तितः ।
स निर्दहति पापानि मन्वन्तरशतेष्वपि ॥
गीतवाद्यादिनिर्घोष देवदेवस्य कारयेत् ।
घण्टाऽभावेऽशक्तस्य सर्व्ववाद्यमयो यतः ॥

---

(1) Y Omits the portion bracketed

जयकारस्य करणाद् वन्यो भवति भूतले ।
पदे पदे क्रतुफल यात्रानुगमनं हरेः ॥
['सर्व्वे सम्पूर्णतामेति * * * * * * * * ।]
स्तोत्रैः स्तुत्वा हरिं पापान्मुक्तो विष्णुपुरे वसेत् ॥

स्कान्दे,—

स्नानार्चनक्रियाकाले घण्टानादं करोति य. ।
मन्वन्तरसहस्राणि मन्वन्तरशतानि च ॥
घण्टानादेन देवेशः प्रीतो भवति केशवः ।
वेणुवीणास्वनेनैव करोति स्नपन हरेः ॥
मृदङ्गवाद्येन युत पणवेन समन्वितम् ।
अर्चनं वासुदेवस्य सततं मोचद नृणाम् ॥
स्नानकाले च देवस्य पठेन्नामसहस्रकम् ।
प्रत्यक्षर भवेत् पुण्यं कपिलागोशतोद्भवम् ॥
गीतवाद्याद्यभावे तु कुर्य्यात् पुस्तकवाचनम् ।
न लौकिकैः स्तवैर्देवास्तोषयेद् वाह्यजैरपि ॥

वाह्यजैः बौद्धाद्यागमस्थैः ।

'लौकिकनिषेधापवादमाह,—

अदुष्टलक्षणैः देवं स्वयं विरचिताक्षरैः ।
स्तुवन् ब्राह्मणशार्दूलः सर्व्वान् कामानवाप्नुयात् ॥

---

(1) ३. Omits the portion bracketed
(2) ३ लौकिकनिषेधापवादमाह ।

तथा,—कुर्य्यादारात्रिकं यस्तु कल्पकोटिं वसेद् दिवि ।

मन्त्रहीनं क्रियाहीनं यत् कृतं पूजनं हरेः ।

सर्व्वं सम्पूर्णतामेति कृते नीराजने सुत ॥

नीराजनञ्च स्वर्णादिपात्रे गोमयादिकृतपद्मकस्वस्तिकश्रीवत्स-कौस्तुभध्वजसहित'दूर्व्वाक्षतचूतन्यग्रोधाश्वत्थपत्रसहिते नानावर्त्ति-युक्तदीपं कृत्वा सन्दर्शनम् । 'स्कान्दे,—

कृष्णाग्रतो महाभक्त्या कुर्य्यात् पुस्तकवाचनम् ।

प्रत्यक्षरं लभेत् पुण्यं कपिलागतदानजम् ॥

ऋग्यजुःसाममन्त्रैश्च कृष्णं सन्तोषयन्ति ये ।

कल्पान्तं ब्रह्मलोके 'तु ते वसन्ति द्विजोत्तमाः ॥

योगशास्त्राणि वेदान्तं 'ये जनाः कृष्णसन्निधौ ।

पठन्ति रविबिम्बं ते भित्त्वा यान्ति न संशयः ॥

यः पठेद्रामचरितं भारतं व्यासभाषितम् ।

पुराणानि महीपाल प्राप्ता मुक्तिं न संशयः ॥

तथा,—अगम्यागमने पापमभक्ष्यस्य च भक्षणे ।

सर्व्वं तत्राशमायाति मण्डयित्वा हरेर्गृहम् ॥

अणुमात्रञ्च यः कुर्य्यान्मण्डनं केशवाग्रतः ।

सदा धातुविकारैश्च कल्पकोटिं वसेद् दिवि ॥

---

(१) Y. दधिदूर्व्वा०

(२) Y. स्कन्दपुराणे ।

(३) Y. ० च०

(४) Y. योगिन० ।

सर्व्वतोभद्रमण्डल परिभाषायामुक्तम् ।

शालग्रामशिलाग्रे तु यः कुर्य्यात् स्वस्तिकं [1]शुभम् ।
कार्त्तिके तु विशेषेण पुनात्यासप्तमं कुलम् ॥
स्वस्तिक माधवस्याग्रे य कुर्य्याद् बहुरूपकम् ।
सप्तजन्मानि वैधव्यं न [2]साप्नोति कदाचन ॥

[3]स्वस्तिकमण्डलञ्चैवम्,—

अष्टादशाष्टादशकैः पदानां विशतं भवेत् ।
चतुर्विंशाधिकं तत्र मध्ये षट्त्रिंशताम्बुजम् ॥
स्वस्तिकाष्टकमाशासु लिखेद् विधिवदीदृशम् ।
षट्त्रिंशत्कोष्ठकैरेकं स्वस्तिकं दिशि कारयेत् ॥
पद्मावसानसूत्राणि स्थापितानि न लोपयेत् ।
एकं त्रीणि वहिः पञ्च नव कोष्ठस्य मार्जनात् ॥
अथ द्वादशकोष्ठेसु स्वस्तिकं कार्य्यमीदृशम् ।
षोड़शषोड़शकोष्ठेसु स्वस्तिकाष्टकमालिखेत् ॥
अन्तरेकं वहिस्त्रीणि स्यादेवं कोष्ठमार्जनम् ।
पदैः षोड़शभिर्मध्ये [4]पद्मकं परिकल्पयेत् ॥
मार्जयेत् स्वस्तिकाकारं श्वेतपीतारुणासितैः ।
रजोभिः पूरयेत् तानि स्वस्तिकानि शिवादितः ॥

---

(१) Y ध्रुवम् ।
(२) D प्राप्नोति ।
(३) Y स्वस्तिकमण्डलं यथा ।
(४ D पद्मं ।

महापातकयुक्तोऽपि पातकी चोपपातकी ।
विमुक्तपापो भवति विष्ण्वायतनचित्रकृत् ॥
यावन्ति विष्णुरूपाणि सुरूपाणि १विलेखयेत् ।
तावद्युगसहस्राणि विष्णुलोके महीयते ।

स्कान्दे,—त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ॥
नमितः सर्व्वदेवैस्त्वं पाञ्चजन्य नमोऽस्तु ते ।

इति शङ्खमादाय,—

शङ्खे कृत्वा तु पानीयं भ्रामयेत् केशवोपरि ।
यानि धेनुसहस्राणां २फलं प्राप्नोति तावता ॥

स्नानान्ते—देवस्य मस्तकं कुर्य्यात् कुसुमोपशितं सदा ।
इति वचनान्मस्तके पुष्पं दद्यात् ।

भ्रामयित्वा हरेर्मूर्द्ध्नि मन्दिरं शङ्खवारिणा ।
प्रोक्षयेद् वैष्णवो यस्तु नाशुभं तद्गृहे भवेत् ॥
कृत्वा पादोदकं शङ्खे वैष्णवानां महात्मनाम् ।
यो ददाति तिलैर्मिश्रं चान्द्रायणफलं लभेत् ॥*

३[इति विष्णुगृहकार्य्याणि ।

(१) Y. सुलेखयेत् ।
(२) Y. फलमाप्नोति ।
(३) Y Omits the portion bracketed

* Y reads the following after this mark —

अथ महास्नानम् ।
महास्नानेन गोविन्दं सम्यक् स्नाप्य मानवः ।
सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ॥

# अथ दुर्गायाः।

देवीपुराणे,—

देवीगृहन्तु यः भक्त्या सम्मार्जयति नित्यशः।
स भवेद् बलवान् सौख्यधर्मसम्पत्तिसंयुतः॥
देव्या गृहन्तु यः भक्त्या गोमयेनोपलेपयेत्।
स्त्री पुमान् वा यथाशक्ति षण्मासाय निरन्तरम्।
स लभेदीप्सितान् कामान् देवीलोकञ्च गच्छति॥

भविष्यपुराणे—रत्नाकारमण्डल देवीगृहे कृत्वा वैष्णवीलोकाप्ति। पद्माकारमण्डले ब्रह्माणीपुरप्राप्तिः शङ्खचूर्णमण्डलकरणे वाराहीलोकप्राप्तिः। त्रिशूलयुक्तमण्डलेन माहेश्वरीलोकः। वज्रचिह्नितमण्डलेन ऐन्द्रीलोकप्राप्तिः। पीतकृष्णादिवर्णैः स्त्रीवस्त्राकृतिमण्डलेन स्त्रीलोकप्राप्तिः। स्वस्तिकमण्डलेन कल्पान्तममरलोकप्राप्तिः। निर्माल्यमपकृष्य दन्तधावनमुखक्षालने।

घृताभ्यक्ता घृतस्नाता दुर्गा रत्नाङ्गिरुचयेत्।
यवगोधूमजैश्चूर्णैर्घर्षयेद् वल्कलेन च॥
घृतेन पयसा दध्ना चण्डिका स्नपयेन्नृप।
बिल्वपत्रैः पादपीठं घर्षयेद् यत्नतस्ततः।

---

मन्त्रद्वीपमित वा। वक्षभ्यः आदर्कमितम्। दर्पणच्छत्रचामरादिनानाविधपूजोपचारा। इत्येव पूजा समाप्ता। आचार्यदक्षिणा। इति बृहन्नारदीयोक्त विष्णुमहास्नानविधि।

गोसहस्रशते दत्ते पुष्करे यत्फलं लभेत् ॥

पिष्टप्रदीपघृताश्वत्थादिपल्लवमेध्यौषधियवादिवीजादिभिः शङ्खभेर्य्यादिनिनादसहिते यावद्दिन नीराजनं तावत्कल्पसहस्रं दुर्गालोकप्राप्तिः। प्रदीपेन नीराजने सूर्य्यलोकप्राप्तिः। लवणाद्यतैर्विष्णुलोकप्राप्तिः। सुवर्णरूप्यैर्ब्रह्मलोकप्राप्तिः। त्रिकालं गीतवाद्यनृत्यकरणे पदसंख्यवर्षसहस्रं ब्रह्मलोकप्राप्तिः। पञ्चगव्यस्नाने सुरभीपुरप्राप्तिः। कपिलापञ्चगव्यघृतक्षीरैः स्नानं ततः शतगुणम्। वर्षपद्मसहस्रार्जितपापक्षयार्थं घृताभ्यङ्गः। सूक्तनवम्या घृतस्नानेन एकविंशपुरुषोद्धरणपूर्व्वकं दुर्गालोकप्राप्तिः। क्षीरस्नानेनेन्द्रलोकप्राप्तिः। दधिस्नानेन शिवलोकः। इक्षुरसस्नानेन विष्णुलोकः। गन्धचन्दनवारिस्नानेन चन्द्रलोकः। हेमवारिस्नानेन वसुलोकः। रत्नजलस्नानेन विष्णुलोकः। द्रोणबिल्वकरवीरनोलोत्पलान्यतमपुष्पजलस्नानेन विष्णुलोकः। कर्पूरवारिस्नानेन चण्डिकासालोक्यम्। अगुरुवारिस्नानेनेन्द्रलोकः। पितॄनुद्दिश्य मधुस्नानात् वर्षशतत्रयं पितृतृप्तिः। सर्व्वैरेतैर्युगपत् स्नानेनाश्वमेधशतसहस्रराजसूयशतफलोत्तरं विष्णुलोकः। पौर्णमास्यां नवम्यामष्टम्याञ्च स्नानस्य वाजपेयफलम्। कुम्भविशेषात् फलविशेषः। पुष्पवारिणा अर्घ्यदाने स्वर्गः। गन्धोदकार्घ्येण गन्धर्व्वलोकः। द्वादशाङ्गार्घ्येण दशपद्मसहस्रवर्षं स्वर्गः।

आपः क्षीरं कुशाग्राणि हविरक्षततण्डुलाः।
तिलाः सिद्धार्थक दूर्व्वा कुङ्कुमं रोचना मधु ॥

इति द्वादशाङ्गार्घः। दाम्बाघ्र्यपात्रेणाग्निष्टोमफलम्।

ताम्रपात्रेण पौण्डरीकफलम् । पलाशपद्मपत्राभ्यां गोसहस्रदान फलम् । रौप्यपात्रेण विष्णुयागफलम् । सुवर्णपात्रेण बहुसुवर्ण यज्ञफलम् । एवं सर्व्वोपचारपात्रे फलविशेषः ।

---

## अथ(सूर्य्य)देवदर्शनप्रदक्षिणनमस्काराः ।

भविष्यपुराणे,—

मेरुमन्दरमानोऽपि राशिः पापस्य कर्म्मणः ।
प्रासाद्य भास्करं मर्त्त्यस्तन्नाशयति तत्क्षणात् ॥
यः कुर्य्याद्दर्शनं मासमेकाहारी जितेन्द्रियः ।
स यत् फलमवाप्नोति न तत् सर्व्वैर्महामखैः ॥
पौर्णमास्याममावास्यां दर्शनं पुण्यदं स्मृतम् ।
सप्तम्याञ्च तथाष्टम्यां दिवसे च रवेः सदा ॥

सप्तप्रदक्षिणप्रणामाद्राजसूयाश्वमेधफलम् ।

त्रिःसप्त प्रदक्षिणीकृत्य नमस्कारात् परां गतिम् ।
प्रणम्य दण्डवत् भूमौ गतिं पुण्यशतोद्भवाम् ॥

---

## अथ शिवस्य ।

भविष्यपुराणे,—

लिङ्गस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम् ।
सकृत्प्रदक्षिणीकृत्य सर्व्वपापैः प्रमुच्यते ॥

स्कान्दे,—

सुदूरमपि गच्छेत यत्र देवो महेश्वरः ।
दृष्ट्वा लिङ्गं महेशस्य पातकैर्विप्रमुच्यते ।
सप्तजन्म कृतैर्दण्डी मनोवाक्कायकर्म्मभिः ॥
पूजितं वा महादेवं पूज्यमानमथापि वा ।
दृष्ट्वा प्रयाति वै मर्त्त्यो ब्रह्मलोकं न संशयः ॥
एकः पूजयते भक्त्या भक्त्या चान्यः प्रपश्यति ।
तुल्यमेव फलं ताभ्यां भक्तिरेवात्र कारणम् ॥
यः प्रातर्देवदेवेशं शिवलिङ्गस्वरूपिणम् ।
पश्येत् स याति सर्व्वस्मादधिकां गतिमेव हि ॥
मध्याह्ने च महादेवं दृष्ट्वा यज्ञफलं लभेत् ।
सायाह्ने सर्व्वयज्ञानां फलं प्राप्य विमुच्यते ॥

स्कान्दे,—

स्नातो यः पूर्व्वसन्ध्यायां सदा मामभिगच्छति ।
स स्नातो यज्ञराजस्य शिवं भवति वीर्य्यवान् ॥

तथा,— प्रातस्तु दर्शनं शम्भोर्नैशमेनो व्यपोहति ।

आजन्मनस्तु मध्याह्ने सप्तजन्मकृतं निशि ।
अर्द्धमासकृतं पापं दृष्ट्वा पर्व्वणि सन्त्यजेत् ॥
सोमनाथं जगन्नाथं दृष्ट्वा स्पृष्ट्वा विकल्मषः ।
जायते नात्र सन्देहः अपि चाण्डालयोनिजः ॥

योगशिवीये,—

अङ्गुष्ठमुच्छ्रितं कृत्वा बद्धा मुष्टिञ्च दक्षिणे ।
पिण्डिकायां न्यसेच्छिन्नमङ्गुष्ठेन च संस्पृशेत् ॥
उमामहेशमन्त्राभ्यां स्पर्शनं मोक्षकाङ्क्षिणाम् ।
शिवोमामन्त्रयोगेन स्पर्शनं भूतिमिच्छताम् ॥

भविष्यपुराणे,—

कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतने नरः ।
अश्वमेधसहस्रस्य यष्टस्य च फलं लभेत् ॥

अन्यत्र च—

प्रदक्षिणत्रयं कुर्य्यात् प्रासादस्य समन्ततः ।
सव्यापसव्यन्यायेन मृदुगत्या शुचिर्नरः ॥
पदे पदेऽश्वमेधस्य यज्ञस्य लभते फलम् ।
सव्यं व्रजेत् ततोऽसव्यं प्रणालीं नैव लङ्घयेत् ॥

अत्रानेकगुणविधानात् प्रकरणान्तराच्च भिन्नत्वेऽपि सधर्म्मकत्वादधर्म्मके भविष्यपुराणीयप्रदक्षिणेऽतिदेशात् सव्यापसव्यादिधर्म्मप्रवृत्तिः शिवप्रदक्षिणं प्रत्ययान्तरसादृश्या । एवमेकीभूतमनाः कुर्य्यात् शिवे च प्रदक्षिणत्रयम् । अत्रापि धर्म्मप्रवृत्तिरेव ।

यदपि

चण्डस्य (च) तपस्यापि देवस्य च शुभार्थिभिः ।
मध्ये यात्रा न कर्त्तव्या यत्र लिङ्गं क्रियामयम् ॥

इति

बाणे स्वयम्भूलिङ्गे च सोमसूत्र न विद्यते ।

इति कृत्रिम एव लिङ्गे सोमसूत्रलङ्घनदोषः ।

सोमसूत्रप्रणालादिलङ्घने तु महद् भयम् ।

इत्यपि सामान्यं कृत्रिमपरमेव । तथापि पुरुषार्थदोषो बाणस्वयम्भू(लिङ्गे)च माभूत् । सव्यापसव्यादियुक्तप्रदक्षिणविधिः स्यादेवाविशेषात् । तन्त्रसारसंहितायाम्,—

अर्घ्यपात्रं तथा पुष्पमर्चनायागसाधनम् ।
गृहीत्वा नैव कुर्व्वीत देवतायाः प्रदक्षिणम् ॥
देवस्त्रिपरीवारवाहनानाञ्च मध्यतः ।
प्रदक्षिणं न कुर्व्वीत कुर्य्यात् सर्व्वस्य बाह्यतः ॥
प्रासादे मण्डपे गेहे वृक्षमूले वनेऽपिवा ।
पूज्यन्ते देवता यत्र तत्रैवं विधिमाचरेत् ॥

भविष्यपुराणे,—

नमस्कृत्य महादेवमश्वमेधफलं भवेत् ।
प्रणम्य दण्डवद् भूमौ नमस्कारेण योऽर्चयेत् ।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥

अत्र प्रणामपूर्व्वकाञ्जलिकरणं शिरसि फलाय विधीयते । प्रणामनमस्कारयोर्भेदात् ।

जानुभ्याञ्चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामं देवेशे सर्व्वान् कामानवाप्नुयात् ॥

भविष्ये,—

सर्व्वदानोपवासेषु सर्व्वयज्ञेषु यत् फलम् ।
स्तुतिजप्योपहारेण शिवे तत्फलमाप्नुयात् ॥

स्तुतिः शिवस्य । जपः शैवमन्त्रस्य ।

शिवाहुत्या जगत् कृत्स्नं दृष्टिपातेन धारयेत् ।
यत् सम्धार्य्य जगत् पुण्यमग्निकार्य्येण तल्लभेत् ॥

अग्निकार्य्यञ्च—

तिलैर्होमः प्रकुर्व्वीत दधिमध्वाज्यसंयुतैः ।
अष्टोत्तरशतञ्चाज्यं मूलमन्त्रेण मन्त्रवित् ॥

इति वचनादेवं कार्य्यम् । स्कान्दे,—

इदञ्च परमं गुह्यं यो मे देवि निवेदयेत् ।
अर्कपर्णपुटं पूर्णं घृतस्य मधुनस्तथा ॥
अर्चयित्वा च मां देवि यो मे नामानि कीर्त्तयेत् ।
चतुर्द्दश्यामथाष्टम्यां पक्षयोरुभयोरपि ।
वामदेव सुदेवेति हरशुभेति वा पुनः ॥
उमापते नीलकण्ठ शान्त श्रीकण्ठ गोपते ।
सर्व्व भीम पशुपते शङ्कर प्रभवेति च ।
महादेवेति चाप्यन्यं नाम गुह्यं प्रकीर्त्तयेत् ॥

दिवि देवैश्च पूज्यन्ते ।

एतेषामेकमपि यः कथयेद् वा पठेत् सदा ।
स देहबन्धं भित्त्वा तु मामेव प्रतिपद्यते ॥

तथा,—

इमानि तु महाभागे यो मे नामानि कीर्त्तयेत् ।
समस्तनिलयो भर्गो भस्मशायी यतक्रतुः ॥
वामदेवः प्रशान्तश्च सर्व्वश्चैव त्रिलोचनः ।
तापसोऽर्च्यः प्रियः सेव्यो यज्ञरूपोऽन्नकालकृत् ॥
पुराणः पुरुहूतश्च मृत्योर्मृत्युर्जितेन्द्रियः ।
यतेन्द्रियो निरिन्द्रियः सर्व्वभूतहृदिस्थितः ॥
संसारचक्री योगात्मा कपाली दण्डिरेव च ।
महादेव महादेव महादेवेति चैवहि ॥
पठेदेतन्नियमवान् शृणुयाद् वापि यः सदा ।
स देहभेदमासाद्य योगात्मा गणपो भवेत् ॥

तथा,—

कीर्त्तयन्ति च ये रुद्रं सकृदप्यत्र मानवाः ।
सर्व्वपापैः प्रमुच्यन्ते सप्तजन्मकृतैरपि ॥
अश्वमेधसहस्रास्त्रिर्महादेवेति कीर्त्तनात् ।
हरहरेत्युच्चरन् मर्त्त्यः सर्व्वपापैः प्रमुच्यते ॥
ॐ नमो नीलकण्ठाय इति पुण्याक्षरात्मकम् ।
मन्त्रमाह सकृद् वा यः पातकैः स विमुच्यते ॥

त्रिपुरहर हरादिदेव प्रभो
त्रिनयन शङ्कर रुद्रपाणे ।
भव शरणमितीरयन्ति येऽस्मिन्
भवजलधौ न भवन्ति ते मनुष्याः ॥
जयेश्वर महादेव जय भूतपते हर ।
जयाशेषमहापापमोचक त्रिपुरान्तक ।
इति सङ्कीर्त्य वृजिनं त्यक्त्वा यान्ति परां गतिम् ॥
मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्व्वाय महादेवाय ते नमः ॥
एतानि मम नामानि यः पठेत् शिवसन्निधौ ।
तस्य मृत्युभयं नास्ति सत्यं सत्यं वदाम्यहम् ॥
सकृदुच्चार्य्य रुद्रेति सर्व्वपापैः प्रमुच्यते ।
हरेति कीर्त्तिते वापि ज्योतिष्टोमफलं लभेत् ॥
[1][भवेति कीर्त्तिते वापि सर्व्व(सर्प)मेधफलं लभेत् ।]
शर्व्वेत्युक्त्वा नमस्कृत्य शिवलोके महीयते ॥
वेदैरधीतैः किं तस्य महादेवेति यो वदेत् ।
शिवेति सकृदुच्चार्य्य मोक्षमाप्नोति मानवः ॥
अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा ।
यः स्मरेद् देवमीशानं न स पापेन लिप्यते ॥
स्कान्दे,— निर्म्माल्यं यो हि मे देवि शिरसा धारयिष्यति ।
अशुचिर्भिन्नमर्य्यादो नरः पापसमन्वितः ।

(1) D Omits the portion bracketed.

नरके पच्यते घोरे तिर्य्यग्योनौ च सम्भवेत् ॥
ब्रह्महापि शुचिर्भूत्वा निर्म्माल्यं यस्तु धारयेत् ।
तस्य पापं महत् शीघ्रं नाशयिष्ये महाव्रते ॥

अत्र धारणाङ्गतया शुचित्वं विधीयते । तेनाशुचिधारणे दोषः शुचित्वप्ररोचनार्थो न पुनरशुचेर्धारणे नरकपातफलकः । केवलमविहितरुद्रनिर्म्माल्यस्पर्शनमशुचेः स्नाननिमित्तान्तरम् । निर्म्माल्यापकर्षणादेर्विहितत्वात् तदा स्पर्शनं न स्नाननिमित्तम् । तेन शुद्धिकाले धारणमशुद्धिकाले त्यागः । निर्म्माल्यञ्चाङ्गलग्नपत्रपुष्पगन्धघृतादि न तु नैवेद्यं

ब्राह्मे,—रुद्राङ्गलग्नं सर्व्वञ्च दह्येत् सर्व्वञ्च तत्क्षणात् ।
इति निर्म्माल्यप्रतिपत्तिमुक्ता"भक्ष्याश्चेभ्यश्च शाम्भव"मिति नैवेद्यस्य पृथक् प्रतिपत्तिविधानात् । यत्तु योगशिवीये,—

वितानच्छत्रचिह्नानि वस्त्रभूषणवाहनम् ।
गोभूहिरण्यदासादि देवद्रव्यमुदाहृतम् ॥
नैवेद्य गन्धपुष्पाद्यमचिराम्लायते च यत् ।
तन्माल्यमुपभुक्तं सन्निर्म्माल्यमभिधीयते ॥
[1]शिवार्च्चारूढनैवेद्यभक्षणं लङ्घन स्रजाम् ।
दान वा दीक्षितस्यापि निषिद्धं त्र्यम्बकाज्ञया ॥

उभयथापि निर्म्माल्यधारणं शुचिना कार्य्यम् । नैवेद्यस्य निर्म्माल्यभिन्नत्वे च

1) I. 1 शिवाज्ञा रुद्रनैवेद्य

न भुञ्जीत निवेद्यान्न गणानाञ्च शिवस्य च ।

इति वाक्यान्तरात्तन्निषेधोऽस्त्येव ।

न धारयेत् क्वचित् शम्भो र्निर्माल्यञ्च न दापयेत् ।

इति न धारयेदुपयोगार्थं गृहादौ न रक्षयेदित्यर्थं । एवम्,—

कुष्ठादौ जायते दानाद्भातङ्कस्तस्य भक्षणात् ।

लङ्घनात् सिद्धिहानि स्यान्निदध्याद्दर्शनोदके ॥

इत्यस्य प्रतिपत्तिविधिशेषत्वेऽपि स्मृत्यन्तरे शिवनिर्माल्यदान भक्षणलङ्घननिषेधादपेक्षितानिष्टफल स्यादेव । अत्रापवादवाक्य पठन्ति,— रत्नहेमास्थिलिङ्गेषु चले लिङ्गे प्रदक्षिणे ।

गुरुष्वपि च निर्माल्य नाख्यासु प्रतिमासु च ॥

अत्र प्रदक्षिणपदेन वाणस्वयम्भूलिङ्गमुच्यते । अत्र सोमसूत्राभावेन प्रदक्षिणसम्भावनया प्रदक्षिणयोग्यत्वसम्भवात् । गुरुषु स्थूलतरेषु प्रासाद विना वहि स्थापिताकाष्ठलिङ्गेषु । आख्यास्विति प्रतिमाविशेषण तेन शिवाख्यासु प्रतिमास्वित्यर्थं । तेन कृत्रिम मनुष्यस्थापितलिङ्गमात्रस्य निर्माल्य दोष नान्यत्रेति अस्य प्रामाण्येऽपि स्वयम्भूवाणचलरत्नहेमास्थिलिङ्गप्रतिमानैवेद्यमङ्गलनं चामोया प्रतिपत्त्यन्तरविधानादेवाभक्ष्यम् । अपवादवचनादापदि कदाचित् भक्षण न दोष । यत्तु —

पत्र पुष्प फल तोयमन्नपानाद्यमौषधम् ।

अनिवेद्य न भोक्तव्यं यच्चान्यदुपकल्पितम् ॥

इति तदत्यन्तशिवभक्तस्य स्वभोज्ये शिवोपभुक्तिचिन्तामात्रपरमिति वदन्ति । ]

## [1]अथ विष्णोः ।

[2]स्कान्दे,—

त्रिकाले ये प्रपश्यन्ति मुखं कृष्णस्य नित्यशः ।
न तेषां पुनरावृत्ति र्विष्णुलोकात् कथञ्चन ॥
अर्च्चितं केशवं दृष्ट्वा सर्व्वपापैः प्रमुच्यते ।
पूजितं पूज्यमानं वा यः पश्येत् भक्तितो हरिम् ।
श्रद्धया मोदयेद् यस्तु सोऽपि योगफलं लभेत् ॥

[3]स्कान्दे—

ये पश्यन्ति नरा विष्णुं हेमभूषणभूषितम् ।
सकृद् भक्त्या कलौ शक्र पुनात्यासप्तमं कुलम् ॥
ये पश्यन्ति सकृत् कृष्णं पद्मपत्रोपरिस्थितम् ।
भक्त्या पद्मालयाकान्तं तैराप्तं दुष्करं पदम् ॥
चित्रस्थं पुण्डरीकाक्षं [4]सविलासं सविभ्रमम् ।
दृष्ट्वा विमुच्यते पापै र्जन्मकोटिषु[5] सञ्चितैः ॥
कान्तिभूषणभागाद्याश्चित्रे यस्मात् स्फुट स्थिताः ।
तस्मात् सन्निधिमायान्ति चित्रस्थाः सुविशेषतः ॥

---

(१) अथ दर्शनप्रणामप्रदक्षिणादिफलम् ।
(२) स्कन्दपुराणे ।
(३) स्कन्दपुराणे ।
(४) सविन्यासं॰
(५) ॰कोटिशर्जितै. ।

दृष्ट्वा सम्पूजितं देवं नृत्यमानोऽनुमोदयेत् ।
असंशयमतिप्राज्ञः परं ब्रह्माधिगच्छति ॥

गारुड़े,—

यः पश्यति मुखं विष्णो रात्रौ जागरणे स्थितः ।
[1]शतजन्मकृतं पापं निमिषार्द्धेन नश्यति ॥

[2]स्कान्दे—

शङ्खे कृत्वा तु पानीयं भ्रामयेत् केशवोपरि ।
सन्निधौ वसते विष्णोः कल्पान्तं क्षीरसागरे ॥
एवं कृत्वा तु कृष्णस्य यः करोति प्रदक्षिणम् ।
पठन्नामसहस्रन्तु स्तवमन्यं पठन्नृप ।
सप्तद्वीपवतीपुण्यं लभेत् प्रतिपदे पदे ॥
कन्यामासकदानस्य फलं [3]विप्र पदे पदे ।
पुरुषस्तु समाप्नोति यः करोति प्रदक्षिणम् ॥
प्रदक्षिणं ये कुर्व्वन्ति भक्तियुक्तेन चेतसा ।
न ते यमपुरं यान्ति [4]यान्ति पुण्यवतां गतिम् ॥
देवदेवस्य कृष्णस्य यः करोति प्रदक्षिणम् ।
पदे पदेऽश्वमेधस्य यज्ञस्य फलमाप्नुयात् ॥
प्रदक्षिणेन चैकेन देवदेवस्य मन्दिरे ।
पृथ्वीप्रदक्षिणफलं नरः प्राप्य हरिं व्रजेत् ॥

---

(१) Y. शतजन्मार्जितम् ।
(२) Y स्कन्दपुराणे—
(३) D विप्रा. ।
(४) Y प्राप्य—

[1]पृथ्वीप्रदक्षिणफलमश्वमेधशतफलप्राप्त्यनन्तरमोक्षप्राप्तिरूपं भारतोक्तम् ।

त्रिः प्रदक्षिणमावृत्य प्रत्येकं दण्डवत् क्षितौ ।
कीर्त्तयन् मम नामानि यज्ञकोटिफलं लभेत् ॥

अत्र प्रदक्षिणप्रणामकीर्त्तनानां त्रयाणां फलम् ।

त्रिः प्रदक्षिणं यः कुर्य्यात् [2]साष्टाङ्गञ्च प्रणामकम् ।
दशाश्वमेधस्य फलं [3]प्राप्नुयान्नात्र संशयः ॥
प्रदक्षिणं यः कुरुते कार्त्तिके विष्णुसद्मनि ।
पदे पदेऽश्वमेधस्य फलभागी भवेन्नरः ॥

यत्र यत्र संख्या नोक्ता तत्र तत्र—

एकं प्रदक्षिणं चण्ड्याः सप्तार्के विघ्ननायके ।
चत्वारि [4]केशवस्य स्यात् शिवस्यार्द्धं प्रदक्षिणम् ॥

[5]अर्द्धं द्वयम् । तथा—

नमो ब्रह्मण्य[6]देवाय यो मां दृष्ट्वाभिवादयेत् ।
भवत्यकाल्मयो नित्यं सुखं याति महापथम् ॥

---

(१) D पृथ्वीप्रदक्षिणफलमश्व मेध । मनृफलप्राप्त्यनन्तरमोक्षप्राप्तिरूपं भारतोक्तम् ।
(२) I. साष्टाङ्गस्य प्रणामकम् ।
(३) Y. ०प्नुयान्नात्र •
(४) I. केशवे विद्यात् ।
(५) Y. नार्द्धद्वयम् । E F अर्द्धद्वयम् ।
(६) Y • देवायेति•

देवार्चादर्शनादेव प्रणमेन्मधुसूदनम् ।
स्थानापेचा न कर्त्तव्या दृष्टार्चां मुनिसत्तम ॥
देवार्चादृष्टिपूतं हि शुचि तद्द् वस्तु कीर्त्तितम् ।

यद्यप्येतद्दर्शनमात्रकालीनप्रणामविधिप्ररोचनार्थं तथापि तत् स्थानस्याशौच[1]सन्देहे तदपनयनप्रतीक्षाया विलम्बापत्ते र्विधिबाधात् सन्दिग्धशौचापवादोऽनेन क्रियते । स्पष्टामेध्यादिदर्शने तु तत्परिहारेणान्यत्र प्रणामसम्भवान्न विलम्ब इति [2]न तदपवादः । तेनार्चाभूमिभागस्याशौचशङ्कया विलम्बो न कार्य्यः भुवता दर्चांप्रस्य स्पष्टामेध्यस्य तु परिहारः कार्य्यः ।

तथा,—

दण्डप्रणामं कुरुते विष्णवे भक्तिभावितः ।
रेणुसंख्यं वसेत् स्वर्गे मन्वन्तरशतं नरः ॥
[3]जानुभ्याञ्चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामं देवस्य सर्व्वकाममवाप्नुयात् ॥
परमाणूनि यावन्ति ललाटे पुरुषस्य च ।
तावदब्दानि विप्रेन्द्र स्वर्गलोके महीयते ॥
नमस्कारकृतो यत्नः सर्व्वयत्नेषु चोत्तमः ।
नमस्कारेण चैकेन साष्टाङ्गेन हरिं व्रजेत् ॥

---

(१) Y सन्देहे तद्द ॰
(२) Y नापवादः ।
(३) D जानुभ्याञ्च पाणिभ्याञ्च—

